ॐ

# धार्म्मिक-लक्षण-वर्णनम्

## काव्यम्



श्रीमदार्य्य पं० कृष्णचन्द्र सूरिः ।

## श्रीमान् बाबू वीराभाई मावजी चावड़ा ।

धर्म्मधीरो दानवीरश्चावडान्वयभूषणः ।
विद्यावृद्धिरतोधीमान्वीरजिद्विमलाकृतिः ॥

POPULAR PRESS—CALCUTTA.

## स्वर्गस्थ श्रीमान् बाबू वीराभाई मावजी चावड़ा।

धर्म्मप्रिय !

आपका तो जन्म ही धार्म्मिक कार्य्यों की उन्नति के लिये हुआ था, अनेक दीन-विद्यार्थियों को शिष्य-वृत्तियाँ (स्कालरशिप) देकर आप उनके विद्या-ज्ञान की वृद्धि के कारण हुए। समय समय पर अनेक विद्वानों से सदुपदेश ग्रहण कर उनका यथोचित सत्कार करते रहे और अनेक विद्यालयों एवं धर्म्म-संस्थाओं को भी यथासमय आर्थिक-सहायता देते रहे हैं। पृथ्वी पर जन्म लेकर जो धर्म्म-सेवा आपने की है वह किसी से छिपी नहीं, विरले ही जन अजाने रहे होंगे। आपके महान् कार्य्यों से मुदित होकर धर्म्मग्रन्थरत्नाकर के प्रथम रत्न "धार्म्मिक-लक्षण-वर्णन" का यह द्वितीयसंस्करण आपको सम्मानपूर्व्वक समर्पण करता हूँ आशा है कि आप स्वर्ग-सुख का उपभोग करते हुए मेरी इस कृति को भी सहर्ष स्वीकार करेंगे।

आपके विमल-वंश का शुभचिन्तकः—

कृष्णचन्द्र।

श्रीमान्..............................

मुकाम..............................

पोष्ट..............................

ज़िला..............................

मान्यवर !

धर्म्मग्रन्थरत्नाकर का यह प्रथम-रत्न है।
श्रीमदार्य्यकवि कृष्णचन्द्र का प्रथम-यत्न है॥
भेट आपकी इसे प्रेम से करता हूँ मैं।
होंगे आप प्रसन्न यही हिय धरता हूँ मैं॥
मित्र ! आपको काव्य यह धर्म्म-मार्ग दिखलायगा।
अण्ड-बण्ड-पाखण्ड से निशिदिन दूर भगायगा॥

आपका कृपापात्र—

..............................

..............................

मुकाम..............................

..............................

पोष्ट..............................

..............................

ज़िला..............................

# काश्चिदत्रसम्मतयः ।

१ कालिकातास्थसाङ्गवेदविद्यालयप्रतिष्ठापकानां सकल-शास्त्राध्यापकानां पण्डितश्रीचन्द्रिकादत्तमिश्राणाम्—

पण्डितप्रवरश्रीकृष्णचन्द्रकविरत्नरचित "धार्मिक-लक्षण-वर्णन" नामको ग्रन्थो मया सम्यग्दृष्टः, अत्र च ग्रन्थकृता महता प्रयत्नेन संक्षेपेण धर्मसर्वस्व-सारं निरूपयताऽपि प्रसादगुणमवलम्ब्य जगतो महानुपकारः समपादि। मन्ये चास्य प्रचारेण बालैरप्यधिगतधर्ममर्मभिर्भवितुं सुशक्यते ।

श्रीचन्द्रिकादत्तमिश्रः ।

२ कालिकातास्थश्रीविशुद्धानन्दसरस्वतीविद्यालयसंस्कृ-ताध्यापकानां पण्डितश्रीरघुवीरत्रिवेदिनाम्—

कृतोऽयं ग्रन्थः कविवरैः कृष्णचन्द्रद्विवेदिभिर्धार्मिकलक्षणवर्णनात्मकः, स च मया सम्यग्दृष्टो लोके प्रचारमायातु, इति परमात्मानं प्रार्थये—

पण्डित रघुवीर त्रिवेदी।

३ कालिकातास्थश्रीसावित्रीपाठशालाप्रधानाध्यापकानां काव्यव्याकरणपुराणतीर्थानां पण्डितरमापतिशर्म्मणाम्—

सम्यग्दृष्टं काव्यमेतन्मया श्रीमदार्य्यपण्डितकृष्णचन्द्रसूरिविरचितम्, दर्शनमात्रत एवात्मा प्रसीदति। भवसागरतितीर्षूणां जलयानम्, विद्या-र्थिनां परमा विद्या। ग्रन्थकर्त्रा महता प्रयासेन "घटे सागरो निक्षिप्तः" इत्याभाणकं सत्यं कृतम्। किमुत ? नैतादृशं स्वल्पमपि महदुपकारकं पुस्तकं क्वापि लभ्यते। सम्भावयामि चास्य ग्रन्थस्य प्रचारो लोकोपकाराय भविष्यतीति।

पण्डित रमापति शर्म्मा ।

४ बङ्गविहारार्य्यप्रतिनिधिसभामुखपत्रार्य्यजीवनसम्पादकानां काङ्गड़ीगुरुकुलविश्वविद्यालयतो लब्धविद्यालङ्कारपदवीकानां श्रीमतां पण्डितजयदेवशर्म्मणाम्—

साद्यन्तमवालोकि काव्यं "धार्म्मिक-लक्षण-वर्णं" नाम श्रीमताऽऽद्यकविना पण्डितकृष्णचन्द्रसूरिमहोदयेन प्रबद्धमतिचारु। सोत्कण्ठं पिपठिषूणां छात्राणामुपकारि। अभिनवेन रूपेण च प्राचीनतमाचार्य्याणां राद्धान्तानामनाडम्बरोऽयं प्रादुर्भावः। अध्यापकैश्च पाठ्यतया समुपादेयः प्राथमिकेभ्यो धर्मजिज्ञासुबालेभ्यः।

तत्प्रचारमाकाङ्क्षन्—जयदेवशर्म्मा विद्यालङ्कारः।

५ श्रीमतां 'पण्डितराधामोहनगोकुलजी' महोदयानां नागपुर-प्रणवीर-सम्पादकानाम्—

इस "धार्मिक-लक्षण-वर्णन" नामक पुस्तक में धर्म्म के तत्त्वों का विवेचन है। पुस्तक बड़ी ही उपयोगी है। मैं प्रत्येक हिन्दू बालक बालिकाओं के हाथों में इसे देखकर सुखी हूँगा।

राधामोहन गोकुलजी।

६ बलियामण्डलान्तर्गतदूबहरवास्तव्यानां विशारदोपाधिविभूषितानां सुकविनां पण्डितश्रीसरयूप्रसादशर्म्मणाम्—

मनु-पराशर-गौतम आदि के, निहित हैं स्मृति-रत्न जहाँ अहा!
सुकवि-कृष्ण-सुगुम्फित काव्य से, तदनुसार-विचार-प्रचार हो॥

सुमधुर-पद-शोभी सार गाम्भीर्य्य वाले
सरस-सरल-टीका भाव-भाषा निराले।
लखि सब जन ऐसे ग्रन्थ से मोद पावें
पुनि निगम-प्रथा की ओर भी ध्यान लावें॥

श्रीसरयूप्रसाद पाण्डेय।

वाचक वृन्द !

शीघ्रता की वजह से कहीं २ जो भूलें रह गई हैं उन्हें आपके सुभीते केलिये यहाँ दर्शाता हूँ, कृपया सुधार कर पढ़ें यह प्रार्थना !

| अशुद्ध | शुद्ध | पृष्ठ | पङ्क्ति |
|---|---|---|---|
| द्दष्टव्यम् | द्रष्टव्यम् | ३ | ३ |
| यथारीत्या | यथारीति | ५ | १७ |
| महत्व | महत्त्व | ७ | १६ |
| युत्तिषु | युक्तिषु | १६ | १६ |
| प्रतारयित्वा | प्रतार्य्य | १६ | ८ |
| ग्यारह | दश | २४ | १६ |
| निरोध्रयित्वा | निवार्य्य | २५ | १२ |
| हुए | हुए | ३४ | ३ |
| सामाथवंण | सामाथर्वाण | ४१ | ११ |
| स्वभावेनव | स्वभावेनैव | ४३ | १८ |
| कय्यम् | कार्य्यम् | ५२ | २ |
| साहाय्यकं | सहायकं | ५२ | ७ |
| वृष्ट्यग्न्यनिल | वृष्ट्यग्न्यनिल | ५२ | २० |
| जह | जहाँ | ५६ | २१ |
| द्वितीय | द्वितीया | ५७ | १७ |
| नृणामहनिशं | नृणामर्निशं | ५८ | १७ |
| भूवः | भुवः | ५८ | १६ |
| ब्रह्मारियों | ब्रह्मचारियों | ६० | २१ |
| कश्चित्तत्रयायिवेशश्ठतधूर्त्ता | दूषितत्रखलुब्धां | ६२ | ६ |
| भजन्ती | भजन्ति | ६४ | ४ |
| तुहि | तर्हि | | |
| धर्म्मो खुद से | धर्म्मो से खुद | ६४ | २१ |
| मूढाए | मूढान् | ७१ | ११ |
| वृन्दः | वृन्दम् | ७५ | १४ |

अयि सभ्यवर्य्याः !

किं न जानन्ति भवन्तो यन्मनुष्याः साम्प्रतं सत्यसनातन-वैदिकविस्तीर्णराजमार्गाद्भ्रष्टाः कण्टकाऽऽकीर्णाधार्म्मिक-सङ्कीर्णतस्करकदध्वसु विचरन्तो नानाऽऽकृतिधारिणो न केवलं स्वकीयमन्तःकरणमेव कलुषयन्ति, अपितु मधुरवचनादिभिरनेक-विधैरुपायैश्च भवदीयविमलकुलस्याधारभूतानां कोमलमतीनां बालकानामपि मनाँसि मोहयित्वा ताँस्तत्रापकर्षयितुं भूयोभूयः प्रयतन्तेऽधमाः। नावगन्तुं शक्नुवन्ति भवन्तः सरलप्रकृतय-स्तेषां कपटमुनीनां कापट्यम्।

नावजिगमिषन्ति च तेऽपि किल कस्मै प्रयोजनाय वयमत्र मानवकुले समुत्पन्नाः, परिवर्त्तिनि संसारे जनिं लब्ध्वाऽस्माभिः किं साधयितव्यम्, केनोपायेन विना वयमेतादृशीमधोगतिं सङ्गताः, पुनश्च कस्याध्वनोऽनुसरणतः श्रेयोऽस्माकं भवितु-महिष्यतीति।

किन्त्वत्र के मनो दधति? ये धर्मजिज्ञासवस्त एव। अधार्म्मिकाणां तु नास्त्यनेन प्रयोजनं किमपि। ते तु "यावज्जी-वेत्सुखं जीवेदृणं कृत्वा घृतं पिबेत्" इति वचनमेव पोषयन्त्य-

नवरतम्। स्वभाव एवायं दुरात्मनाम्। उक्तञ्च केनापि नीति-कारेण—

"न धर्म्मशास्त्रं पठतीति कारणं
न चापि वेदाध्ययनं दुरात्मनः।
स्वभाव एवात्र तथातिरिच्यते
यथा प्रकृत्या मधुरं गवां पयः॥"

किमुत ? यथा ते कुर्व्वन्ति तमेव धर्म्मं वदन्ति। वदन्ति च "कस्मिँश्चिज्जड़ीभूतेऽपि पदार्थे देवत्वं प्रकल्प्य तत्प्रमोदाय तत्र पशूनां हिंसनम्, स्वेच्छयाऽऽहारविहारौ, मद्यमांसादिकदूषित-पदार्थसेवनम्, नृत्यगीतवाद्ययुतरात्रिजागरणम्, कापट्येन धनोपार्ज्जनम्," इत्यादीनि धर्म्मलक्षणानि, नेतराणीति। किन्तु प्रज्ञावतां परिषदि न ते धार्म्मिकपदमालभन्ते।

पुनः कीदृशश्चासौ धर्म्मः ? यतोऽभ्युदयनिःश्रेयससिद्धिर्जायते स एव।

अभ्युदयनिःश्रेयससिद्धिस्तु वेदविहितं कर्म्म कृत्वैव लभ्यते जनैः, अतएव वेदोऽखिलोधर्म्ममूलमिति मनुनाऽप्युक्तम्, उक्तञ्च तेन—

"वेदोदितं स्वकं कर्म्म नित्यं कुर्य्यादतन्द्रितः।
तद्धि कुर्व्वन् यथाशक्ति प्राप्नोति परमां गतिम्॥"

अतो धर्म्मानुष्ठानेनैव मनुष्याः समुन्नतिं समधिगच्छन्तीति फलितम्। अत एव नित्यं धर्म्मोऽनुष्ठेयः। स द्विविधः। सामान्यधर्म्मो विशेषधर्म्मश्चेति। सामान्यधर्म्मस्यानुष्ठानं तु

सार्व्वत्रिकम्, न तु विशेषधर्म्मस्य। विशेषधर्म्मस्त्वापदि समुपस्थितायामेवाश्रयणीयः * । अतस्तमापद्धर्म्ममपि वदन्ति । अनापदि तत्समाश्रयणं तु निष्फलमेव। यथोक्तं मनुना—

"आपत्कल्पेन यो धर्म्मं कुरुतेऽनापदि द्विजः।
स नाप्नोति फलं तस्य परत्रेति विचारितम् ॥"

आपद्धर्म्मस्य प्रयोगस्तु सामान्यधर्म्मस्य रक्षणार्थैव कार्य्यः, न त्वन्यत्र। सामान्यधर्म्मस्य धृत्यादीनि दशलक्षणानि मनुना प्रदर्शितानि यथा—

"धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धी र्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम् ॥"

एतत्तत्त्वावबोधनं परमावश्यकमिति विचार्य्य भवद्वंशो-

---

* आपत्कालमेवानुसृत्य प्रातः स्मरणीयेन भगवता शङ्कराचार्य्येणापि बौद्धमतमुन्मूलयितुं वैदिकमतञ्च भूतले पुनः प्रतिष्ठापितुं (ब्रह्म जीवः प्रकृतिरिति (त्रयाणां पदार्थानां नित्यत्वेऽपि) ब्रह्मेत्येकस्यैव पदार्थस्य नित्यत्वमुक्तम्। अन्ययोरनित्यत्वम्। तन्न सार्व्वत्रिकम्। कथम्? वेदेषु पदार्थत्रयस्यापि नित्यत्वोपलब्धेः। अत्र यजुः—

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति ॥"

तथापि वेदविरोधिनां मानविमर्दनाय तेन महात्मना यत्कृतं तत्सर्व्वं सुकृतमेवेति मन्ये। स्मृतिशास्त्रप्रणेता मनुरप्यवस्थापयत्त्यापद्धर्म्मव्यवस्थाम् यथा—

"सहसर्व्वाः समुत्पन्नाः प्रसमीक्ष्यापदो भृशम्।
संयुक्तांश्च वियुक्तांश्च सर्व्वोपायान्सृजेदबुधः ॥"

द्भवेभ्यो बालकेभ्यः ( सुबोधिनीसंस्कृतटीका, अन्वयार्थबोधिनी सरलाटीका, भावार्थबोधिनीभाषाटीका चेति ) तिसृभिष्टीकाभिः समलङ्कृतं "धार्म्मिक-लक्षण-वर्णनं" नाम सरलपद्यमयं काव्यमेतन्मया विरचितम्।

काव्येऽत्र धृत्यादीनां धर्म्मलक्षणानां क्रमेण व्याख्यानम्, कुत्रचिद्धर्म्मविमुखानां निराकरणम्, धार्म्मिकाणाञ्च महत्त्वमपि दर्शितम्। अस्य काव्यस्याध्ययनेन शिशवोऽवश्यं धूर्त्तेभ्यस्त्राणं प्राप्नुवन्तीत्यनुमीयते।

सुबोधिनीसंस्कृतटीकायाञ्चान्वयक्रमेण पद्यगतशब्दानां पर्य्यायाः, अध्येतॄणां विशेषलाभार्थं यत्र तत्र कोषाणां प्रमाणानि च सन्निवेशितानि, यमनियमानामपि दिग्दर्शनं दर्शितम्। टीकेयमतीवसुगमा, अतएव बाळकानां विशेषोपयोगिनी।

अन्वयार्थबोधिनीसरलाटीकायामप्यन्वयक्रमस्तु तथैव, किन्तु पद्यगतशब्दपर्य्यायसंस्कृतशब्दानां स्थाने भारतीयप्रचलितराष्ट्रभाषाशब्दाः सन्निवेशिताः। अनयाऽपि बालकानां विशेषलाभोऽनुमीयते मया।

संस्कृतानभिज्ञेभ्यो जनेभ्यः स्वतन्त्रतया भारतीयप्रचलितराष्ट्रभाषाटीकाऽप्यत्रसन्निवेशिता, तस्या अभिधानम् "भावार्थबोधिनीभाषाटीका" इति। इयञ्च प्रायेण सुबोधिनीसंस्कृतटीकाऽनुसारिणी।

काव्यादस्मात्कतिपयश्लोकाः समुद्धृत्य पूर्व्वं प्रथम-संस्करणमिति नामतः कस्मिंश्चिद्यन्त्रालये मुद्रापिताः, किन्तु तत्र-

स्यानाञ्जनानामसाधारणयाऽनुकम्पया तस्मिन्मुद्रिते सत्यनेका अशुद्धयो नृत्यन्त्यो नर्त्तक्य इव मे नयनयोर्वर्त्मन्यावर्तन्त, तासामत्र संशोधनमप्यकार्षञ्च ।

ये जना जगति किमपि कार्य्यमारोहन्ति त एव तस्मान्निपतन्ति, भूयोऽप्युत्तिष्ठन्ति, तदारोहणे यत्नमालभन्ते च । अकर्म्मण्यैस्तु किमपि कर्त्तुं धर्त्तुं वा न शक्यते, केवलं निन्दैव तेषां वराकाणाममृतमयं भोजनम् । सज्जनास्तु पतितमप्युत्थापयन्त्येव ।

नूनं काव्यस्यास्यानुसेवनेन केषामपि कश्चिदप्युपकारो भविष्यति तर्हि प्रयत्नस्यास्य साफल्यं मन्स्ये । कदाचित्त्रुटयोऽस्मिन्काव्ये भूयोऽपि भवतां दृष्टिपथे पथिकायेरन्, तदा "गच्छतः स्खलनम्" इति कस्यचित्कवेरुक्तिपरं पद्यमत्र मदीयमवलोक्य सन्तोषं यान्तु सहृदयाः ।

अश्वस्थितस्य पतनं भवति प्रमादा-
दुत्थापयन्ति च बुधाः परितोषयन्तः ।
मूर्खा हसन्त्यविरतं परिनिन्दयन्तो
विश्वं तु तद्विबुधवृन्दविचारणीयम् ॥

इदमेव सविनयं निवेदयते—

तत्रभवतामनुचरः—

कृष्णचन्द्रः ।

* ओ३म् *

# धार्म्मिक-लक्षण-वर्णनम्

## > काव्यम् <

स्वयंभुवं विश्वसृजं शुचिं विभुं
विकारशून्यं जनुषामगोचरम्।
प्रणम्य सद्धार्म्मिकलक्षणान्वितं
विवर्ण्यते काव्यमिदं तमोहरम् ॥१॥

सुबोधिनी संस्कृतटीका—स्वयमेव भवतीति स्वयंभूः सर्व्वेश्वरो जगदादिकारणम् "न तस्य कश्चित्पतिरस्ति लोके न वेशिता नैव च तस्य लिङ्गम्। स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इति श्वेताश्वतरोपनिषत्, तं स्वयंभुवम्। विश्वं जगत्सृजत्युत्पादयतीति विश्वसृग् जगदुत्पादकः "स इमाँल्लोकानसृजत" इत्यैतरेयोपनिषत्, तं विश्वसृजम्। विकारै-(र्जन्ममरणादिभि र्ज्ञानस्यकदाचिदपि न्यूनत्वाधिकत्त्वात्मकै र्वा)

परिणामैः शून्यो विहीनस्तं विकारशून्यं सदैकरसं सच्चिदानन्द-स्वरूप मित्यर्थः । जनुषां (जायन्त उद्भवन्तीति "जनेरुसि" जनुषो जन्मवन्त* स्तेषां) प्राणिनाम् । गाव इन्द्रियाणि चरन्त्यस्मिन्निति गोचर इन्द्रियाणां विषयः "विषया अमी गोचरा इन्द्रियार्थाश्च" इत्यमरः । न गोचरोऽगोचर इन्द्रियाविषय स्तं अगोचरं ध्यान-गम्य मित्यर्थः । शुचिं पवित्रं सर्व्वपावनं वा । विभुं सर्व्वत्र-व्यापकं सर्व्वशक्तिमन्तं वा परमात्मानम् । प्रणम्य सर्व्वोन्नतेन शिरसा नमस्कृत्य । सत्यानि च धर्म्मस्येमानि लक्षणानि चिह्नानि सद्धार्म्मिकलक्षणानि मनूदितानीति भावः । यथाह मनुः—

"धृतिः क्षमा दमोऽस्तेयं शौच मिन्द्रियनिग्रहः ।
धी र्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम् ॥"

ते रन्वितं युक्तम् सद्धार्म्मिकलक्षणान्वितम् । इदं मद्बुद्धिस्थम् । तमो ध्वान्तम् "तमो ध्वान्ते गुणे शोके क्लीवं वा ना विधुन्तुदे" इति मेदिनी, तद् हरति विनाशयतीति तमोहरं अज्ञानान्धकारविनाशक-मित्यर्थः । काव्यं प्रबन्धः । विवर्ण्यते निर्म्मीयते । (मयेति-

---

* उणादयो बहुलम् । ३।३।१। उणादयः प्रत्यया वर्त्तमानेऽर्थे सञ्ज्ञायां विषये बहुलं भवन्ति । यतो विहिता स्ततोऽन्यत्रापि भवन्ति । केचिदविहिता-एव प्रयोगत उन्नीयन्ते । इति काशिकाकृदर्थ स्तस्यायमभिप्रायः—

यस्माद्धातो र्यस्मिन्नर्थे (उणादयः) प्रत्यया विहिता स्तस्माद्धातो स्त-स्मादर्थाद्वाऽन्यत्रापि—अन्यस्मिन्नर्थेऽपि ते भवितुमर्हन्ति । केचित्प्रत्यया अप्रयुक्ता अपि कार्य्यवशात्प्रयुज्यन्ते । स च सर्व्वेषां सम्मतः ।

योज्यम् ) काव्येऽत्र वंशस्थवृत्तम् । यथोक्तं महामहिम्ना पिङ्गलाचार्य्येण "वंशस्था ज्तौ ज्रौ"। अन्तिमं तु मालिनीवृत्तम्, तल्लक्षणमपि तत्रैव द्रष्टव्यम् ॥१॥

अन्वयार्थबोधिनी सरलाटीका—स्वयंभुवम्=सब का मालिक, जिसका जन्म न हो। विश्वसृजम्=जगत् को उत्पन्न करनेवाला। विकारशून्यम्=जन्ममरणादि विकारों से रहित, हमेशा एकसा ज्ञानवाला। जनुषां=जीवधारियों की। अगोचरम्=इन्द्रियों से पर,ध्यान के द्वारा जानने योग्य। शुचिम्=पवित्र, वा सबको पवित्र करनेवाला। विभुम्=सब जगह व्यापक, सर्व्वशक्तिमान् (इत्यादि विशेषणविशिष्ट) परमात्मा को। प्रणम्य=प्रणाम करके। सद्धार्म्मिकलक्षणान्वितम्=धर्म्म के यथार्थ दश लक्षणों से युक्त। इदम्=यह। तमोहरम्=अन्धकार को नाश करनेवाला। काव्यम् =कविताओं का समूह, निबन्ध। विरच्यते=बनाया जाता है॥ १ ॥

भावार्थबोधिनी भाषाटीका—स्वयं शब्द का अर्थ "खुद, अपने आप और भू शब्द का अर्थ होना" इन दोनों शब्दों के योग से "स्वयंभू" शब्द बना, जिसके अर्थ "सम्पूर्ण जगत् का आदि कारण, सबका स्वामी, अजन्मा, परमात्मा, इत्यादि होते हैं। श्वेताश्वतरोपनिषद् में लिखा है कि "संसार में न उस परमात्मा का कोई पति है, न कोई उसको अपने काबू मे रखनेवाला है, न उसका कोई निशान (चिन्ह) ही है, और न उसको कोई उत्पन्न करनेवाला है। किन्तु वही परमात्मा "इन्द्रियों के अधिपति जीवात्मा का भी" अधिपति और सबका निमित्त कारण है।" वह विश्वसृग् अर्थात् संसार को

उत्पन्न करनेवाला है। एतरेयोपनिषद् में भी लिखा है कि उस परमात्मा ने इन सम्पूर्ण लोकों को उत्पन्न किये। वह विकारों से रहित है, जन्म मरण रूप बन्धनों में नहीं आता, उसके ज्ञान में कभी भी कमी वेशी नहीं होती, अनादि सच्चिदानन्द स्वरूप है, इसलिये उसका ज्ञान भी अनादि है। वह अगोचर अर्थात् इन्द्रियों से परे है, देखने आदि विषयों में नहीं आता, क्योंकि उसका कोई चिन्ह भी नहीं, केवल ध्यान गम्य है। वह पवित्र है और सबको पवित्र करनेवाला है। वह सब जगह रहनेवाला और सर्व्वशक्तिमान् है, उसको नमस्कार करके धर्म्म के यथार्थ दश लक्षण जो धृति आदि मनुजी ने बताये हैं, उनसे युक्त, अज्ञान रूपी अन्धकार को नाश करनेवाला यह "धार्म्मिक-लक्षण-वर्णन" काव्य बनाया जाता है। इस काव्य में 'वंशस्थवृत्त' है। जिसमें चार गण (जगण, तगण जगण और रगण क्रम से) हों, उसे वंशस्थवृत्त कहते हैं। अन्त में मालिनीवृत्त है, उसका लक्षण भी वहीं पर देखिये ॥ १ ॥

नमस्कारात्मकं मङ्गलं विधाय धर्म्मः कीदृशः ?
इत्युत्पन्नप्रश्नस्योत्तरं ददत्कविराह—

विधेर्विधानस्य विनीतभावतो
जगन्नियन्तुर्नियमेन सेवनम् ।
प्रदर्शितं यन्मनुनापि तत्स्मृतौ
तदेव धर्म्मो दशलक्षणात्मकः ॥२॥

सु० सं० टीका—जगत्संसारं नियच्छति सृष्टिस्थितिप्रलयात्मकभावं गमयतीति (निपूर्व्वकाद् "यमु उपरमे" भौवादिकाद्धातो-

स्तृच्, धातूनामनेकार्थत्वाद्गत्यर्थकोऽप्ययम् ) जगन्नियन्ता तस्य जगन्नियन्तुः सर्व्वशक्तिमतः। विदधाति विशेषेण पोषयति धारयति वा विश्वमिति विधिर्विश्वपोषकः सर्व्वाधारस्तस्य विधेः। विधीयन्तेऽनेन कर्म्माणीश्वरोपदिष्टानि सन्ध्याग्निहोत्रादीनीति विधानं वेदशास्त्रम्। वेदास्तु स्वतःप्रमाणम्। तत्र यल्लिखितं तन्निःशङ्कतया स्वीकर्त्तव्यम्। परमात्मोक्तत्वात्। तस्य चाऽभ्रान्तत्वात्। शास्त्रं तु मन्वादिभिर्महर्षिवर्य्यैः प्रणीतानि धर्म्मपुस्तकानि। तत्र यल्लिखितं तद् वेदानुकूलतयैव मन्तव्यम्। न तु प्रतिकूलतया। तेषां परतः प्रमाणत्वात्। महर्षयोऽपि मनुष्या एवासन्। मनुष्याणाञ्च जीवकोटिस्थत्वादल्पज्ञत्वं प्रसिद्धमेव। जीवस्याल्पज्ञत्वादिधर्म्मवत्वात्। तथापि तेऽस्मदादिभ्यो विशेषज्ञानवन्तः। सर्व्वज्ञस्त्वेक ईश्वर एव। तस्य विधानस्य। विनीतो विनयान्वितः "विनीतः सुवहाश्वेस्याद्वाणिज्यपि पुमाँस्त्रिषु। जितेन्द्रियेऽपनीते च निभृते विनयान्विते" इति मेदिनी, स चासौ भावः स्वभावश्च "भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु" इति शाश्वतः, विनीतभावस्तस्मात् "पञ्चम्यास्तसिल्" विनीतभावतः, विनम्रस्वभावादित्यर्थः। नियमेन यथारीत्या। यत् सेवनं परिपालनम्। तदेव असावेव। दशलक्षणानि धृत्यादीन्येवात्मा कलेवरम् "कलेवरे प्रयत्ने च स्वभावे परमात्मनि। स्वान्ते धृतौ मनीषायामात्मानं कवयो विदुः" इति शाश्वतः। यस्यासौ दशलक्षणात्मकः। धर्म्मः। इति मनुनापि तस्य स्मृतिस्तत्स्मृतिस्तस्यां मनुस्मृतावित्यर्थः। प्रदर्शितं निर्दिष्टम्। अन्यत्राप्यन्यै-

यथा "चोदनालक्षणोऽर्थो धर्म्मः" इति जैमिनिः। "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्मः" इति कणादः ॥ २ ॥

अ० स० टीका--जगन्नियन्तुः=जगत् को अपने काबू में रखनेवाला, उत्पत्ति, पालन और विनाश करनेवाला (और)। विधेः =जगत् को धारण करनेवाला जो परमात्मा है, उसके। विधानस्य=आज्ञा स्वरूप वेदशास्त्र का। विनीतभावतः=अहङ्कार रहित स्वभाव से। नियमेन=नियमपूर्व्वक। यत्=जो। सेवनम्= पालन करना है। तत्=वह। एव=ही। दशलक्षणात्मकः = धृति आदि दश लक्षणस्वरूप अङ्गों वाला। धर्म्मः =धर्म्म है। मनुना=महर्षि मनु ने। अपि=भी। तत्स्मृतौ=उनकी स्मृति में। प्रदर्शितम्=कहा है ॥ २ ॥

भा० भा० टीका—जो जगत् की सृष्टि* स्थिति† और प्रलय‡ करनेवाला है, सर्व्वाधार है, उस परमात्मा का विधान (आज्ञा) जिनके द्वारा सन्ध्याग्निहोत्रादिक उत्तमोत्तम कर्म्म किये जाते हैं, वह वेदशास्त्र हैं। वेद स्वतःप्रमाण है। उसमें जो लिखा है, निःसन्देह माननीय है, क्योंकि वेद ईश्वरोक्त उपदेश है और ईश्वर भ्रान्ति रहित है। शास्त्र तो मनु आदि महर्षियों के

---

* सृष्टि—उत्पत्ति, पैदाइश अर्थात् कारणरूप जगत् का कार्यरूप में परिणत होना।

† स्थिति—कार्य्यरूप जगत् को कायम रखना, पालन करना।

‡ प्रलय—विनाश, मिटाना अर्थात् कार्य्यरूप जगत् को पुनः कारणरूप में परिणत करना।

३६० दिनों का एक मानुष (मनुष्यों का) वर्ष देवताओं का एक दिन रात समझा जाता है (अर्थात् उत्तरायण दिन और दक्षिणायन रात्रि) और ३६०

बनाये हुए धर्म्म पुस्तक हैं। उनमें जो लिखा है वह वेद के अनुकूल होने से माननीय है। प्रतिकूल होनेसे नहीं। क्योंकि वेद के अतिरिक्त सब धर्म्मग्रन्थ परतः प्रमाण हैं। महर्षि भी तो मनुष्य ही थे। जीवकोटि में होनेसे मनुष्यों की अल्पज्ञता प्रसिद्ध ही है, इसलिये कि जीव अल्पज्ञत्वादि धर्म्मवाले हैं। तथापि महर्षि जन हम लोगों से अधिक ज्ञानवाले होते हैं। सर्व्वज्ञ तो एक ईश्वर ही है। उसके विधान (आज्ञा स्वरूप वेद शास्त्र) का अहंकारादि दोषों से रहित होकर नियम पूर्व्वक जो पालन करना है, वही धर्म्म है। जिसके धृति आदि लक्षण स्वरूप दश अङ्ग हैं। यही मनुजी ने भी अपनी मनुस्मृति में कहा है और दूसरे ऋषियों ने भी कहा है। जैसे—"जिन कर्म्मों के करने के लिये वेद में ईश्वर ने मनुष्यों को आज्ञा दी है, वही धर्म्म है।" यह महर्षि जैमिनि ने पूर्व्व मीमांसा में बताया है, और "जिसके आचरण से मनुष्यों को संसार में उन्नति और मोक्ष की प्राप्ति होती हो वही धर्म्म है" यह महर्षि कणाद का वचन है, सो उन्नति और मोक्ष के साधन यही दश लक्षण हैं। जैसा कि अगले पद्य में वर्णन किया जाता है ॥ २ ॥

धर्म्मस्य सामान्य स्वरूपं दर्शयित्वा कविस्तदङ्गभूत-
लक्षणानां महत्वं वर्णयन्नाह—

सुलक्षणानाञ्च सुसेवनाद्द्रुतं
भवोद्भवा भूतिमवाप्य भूयसीम्।
महत्व मूर्द्धं महतां महौजसो
मनोविशुद्धयात्र भवन्ति भूतले ॥३॥

---

मानुषवर्षों का एक वर्ष देवताओं का होता है जिसको दिव्यवर्ष कहते हैं। ४००० दिव्यवर्ष सत्ययुग के होते हैं, जिनमें ४०० दिव्यवर्ष सन्ध्या के और

सु० सं० टीका—सुष्ठु लक्षणानि सुलक्षणानि मनूक्तधर्म्म-चिह्नानि तेषां सुष्ठु सेवनम् तस्मात् सुसेवनात् सम्यक्तया परि-पालनात्। मनसश्चित्तस्य विशुद्धिः पवित्रता मनोविशुद्धि स्तया मनोविशुद्ध्या। भवे संसारे "प्राप्ति संसारसत्तासु जन्मशङ्करयो र्भवः" इति शाश्वतः। उद्भवा जनिङ्गता मनुष्या इत्यर्थः। भूयसीं वहुलाम्। भूतिं ऐश्वर्य्यम् "विभूतिर्भूतिरैश्वर्य्यम्" इत्यमरः। महतां पूजनीयानाम्। ऊर्द्ध्वं समुन्नतम्। महत्वं महिमानम्। च। अवाप्य लब्ध्वा। अत्र अस्मिन्। भूतले पृथिव्याम्। द्रुतं झटिति। महद् विशालम् "महद्राज्यविशालयोः" इति हेम-चन्द्रः। ओजो वलम् "ओजो दीप्ताववष्टम्भे प्रकाशवलयोरपि"

---

४०० दिव्यवर्ष सन्ध्यांश के अधिक जोड़े जाते हैं। इन सबको जोड़ने से ४८०० दिव्यवर्ष सत्ययुग के हुए। अब यह जानना हो कि कितने मानुषवर्षों का सत्ययुग होता है तो ४८०० दिव्यवर्षों को ३६० मानुषवर्षों से गुणा करना चाहिये, ताकि १७२८००० मानुषवर्ष सत्ययुग के निकल आएँगे। बाकी युगों के सन्ध्या सन्ध्यांश सहित जितने वर्ष होते हैं उन्हें आगे लिखता हूँ।

त्रेतायुग के दिव्यवर्ष ३०००+सन्ध्या ३००+सन्ध्यांश ३००=३६००×मानुष-वर्ष ३६०=१२९६००० कुल मानुषवर्ष। द्वापरयुग के दिव्यवर्ष २०००+सन्ध्या-२००+सन्ध्यांश २००=२४००×मानुषवर्ष ३६०=८६४००० कुल मानुषवर्ष। कलियुग के दिव्यवर्ष १०००+सन्ध्या १००+सन्ध्यांश १००=१२००×मानुष-वर्ष ३६०=४३२००० कुल मानुष वर्ष।

चार युगों की एक चतुर्युगी होती है, जिसमें (चारयुगों के १७२८०००+१२९६०००+८६४०००+४३२००० वर्षों को जोड़ने से) ४३२०००० मानुषवर्ष होते हैं।

इति मेदिनी। येषां ते महौजसः महाबला इत्यर्थः। भवन्ति ॥३॥

अ० स० टीका—सुलक्षणानाम्=धार्म्मिक इन सुन्दर लक्षणों के। सुसेवनात्=अच्छी तरह पालन से। मनोविशुद्ध्या=चित्त की पवित्रता से। भवोद्भवाः=संसार में उत्पन्न हुए, मनुष्य। भूयसीम्=बहुत। भूतिम्=ऐश्वर्य्य को। च=और। महताम्=पूजनीय पुरुषों की। ऊर्द्ध्वम्=ऊपर उठी हुई, विस्तृत। महत्वम्=बड़ाई, कीर्त्ति को। अवाप्य=पाकर। अत्र=इस। भूतले=पृथ्वि पर। द्रुतम्=शीघ्र ही। महौजसः=महापराक्रमी। भवन्ति=होते हैं ॥ ३ ॥

भा० भा० टीका—धर्म्म के इन सुन्दर लक्षणों के पालन से मन की पवित्रता के द्वारा मनुष्य अमित सुखों की सामग्री और बड़ों की उच्चतम कीर्त्ति को पाकर महापराक्रमी हो जाते हैं ॥ ३ ॥

---

ऐसी ७१ चतुर्युगियों अर्थात् ३०६७२०००० वर्षों का एक मन्वन्तर (मनु का समय) नाम रक्खा गया है। इस प्रकार १४ मन्वन्तरों के ४२९४०८०००० वर्ष हुए। यहाँ यह बात याद रखना चाहिये कि प्रत्येक मन्वन्तर के आदि और अन्त में एक सत्ययुग के १७२८००० वर्षों का अन्तर होता है। जिसको सन्ध्या या सन्धि कहते हैं। इस प्रकार १४ मन्वन्तरों की १५ सन्धियाँ हुईं। इन १५ सन्धियों के २५९२०००० वर्ष हुए। इन वर्षों को १४ मन्वन्तरों के वर्षों में मिलाने से ४३२०००००० वर्ष हुए। एक हजार चतुर्युगियों के भी इतने ही वर्ष होते हैं। यही ब्राह्म दिन का परिमाण है और इतने ही वर्ष ब्राह्मरात्रि के होते हैं।

ब्राह्मदिन जिसमें परमात्मा अपने उत्पन्न किये हुए कार्य्य जगत् को कायम रखकर उसका पालन पोषण करता है और ब्राह्मरात्रि में उस कार्य्य जगत् को पुनः कारण रूप में परिणत कर देता है। जिसको प्रलय कहते हैं।

धार्म्मिकलक्षणानां महत्वं वर्णयित्वा तदधिकारि-
वर्गनिर्णयपरः कविराह-

मनुष्यवर्य्यैः खलु पूर्व्वजन्मसु
सुसञ्चितो यैः शुभकर्म्मसञ्चयः ।
त एव धर्म्मागतलक्षणोज्ज्वलं
भवन्ति भोक्तुं दशकं त्विहोत्सुकाः ॥४॥

सु० सं० टीका—यै र्मनुष्यवर्य्यैं र्मानवमुख्यैः । खलु निश्चयेन पूर्व्वाणि च तानि जन्मानि पूर्व्वजन्मानि बहुवचननिर्देशादनेकानि जन्मानीति फलितम्, तेषु पूर्व्वजन्मसु । शुभानि सर्व्वेभ्यः सुख-प्रदानि च तानि कर्म्माणि शुभकर्म्माणि तेषां सञ्चयः सङ्ग्रहः । सुसञ्चितः सम्यक्तयोपार्ज्जितस्ते जना एव तु इह अस्मिन्नपि जन्मनीत्यर्थः । धर्म्मे आगतानि धर्म्माङ्गभूतानि च यानि लक्ष-णानि धृत्यादीनीति धर्म्मागतलक्षणानि तै रुज्ज्वलं विशदम् "उ-ज्ज्वल स्तु विकासिनी । शृङ्गारे विशदे दीप्तेऽपि" इति हेम-चन्द्रः । दशकं दश लक्षणानां समूहम् । भोक्तुं आस्वादयितुं सेवितुमित्यर्थः । उत्सुका स्तत्परा भवन्ति ॥४॥

---

ब्रह्म यह नाम परमात्मा का है, उसीने इन दिन रात्रियों का विभाग किया है, इसलिये इनका नाम ब्राह्मदिन और ब्राह्मरात्रि हुआ ।

इसी प्रकार ईश्वर ने अनेक वार जगत् की उत्पत्ति, स्थिति और प्रलय किये हैं और करता रहेगा, जिसका पारावार नहीं । ऋग्वेद मण्डल १० सूक्त १९० में

अ० स० टीका—यैः=जिन। मनुष्यवर्य्यैः=सज्जनोँ ने। खलु निश्चयपूर्व्वक। पूर्व्वजन्मसु=पहले के अनेक जन्मोँ मेँ। शुभकर्म्मसञ्चयः=अच्छे अच्छे कर्म्मोँ का सङ्ग्रह। सुसञ्चितः=भलीभाँति उपार्ज्जन किया है। ते=वे। एव=ही। तु=तो। इह=इस जन्म मेँ भी। धर्म्मागतलक्षणोऽज्ज्वलम्=धार्म्मिक-लक्षणोँ से उज्ज्वल, चमकता हुआ। दशकम्=दशलक्षणोँ के समूह को। भोक्तुम्=उपभोग करने के लिये, व्यवहार मेँ लाने के लिये। उत्सुकाः=तत्पर, तैयार। भवन्ति=होते हैँ ॥४॥

---

लिखा है—"धाता यथा पूर्वमकल्पयत्" अर्थात् परमात्मा जैसे पूर्वकाल मेँ सृष्टि रचता आया है, वैसे ही आगे भी रचता रहेगा।

जो लोग यह कहते हैँ कि "ईश्वर सर्व्वशक्तिमान् है, जब जैसा उसके दिल मेँ समा जाता है, वैसा ही कर गुजरता है।" यह कहना उनकी भूल है। क्योंकि साधारण बुद्धिवाला मनुष्य भी भलाई व बुराई को समझ कर काम करता है, जब जो दिल मेँ आया नहीँ करता; तो भला सर्व्वज्ञ परमात्मा ऐसा अनर्थ क्योँ करेगा? हाँ; जो सनकी हैँ, जिनकी बुद्धि ठिकाने नहीँ, वे ही ऐसा साहस करते हैँ और बुरा नतीजा भोगते हैँ, अपने साथियोँ को भी भुगवाते हैँ।

ईश्वर तो सर्व्वज्ञ और सर्व्वशक्तिमान् आदि गुणोँ से युक्त है। उसने पहले से ही ऐसे नियम बनाये हैँ कि जिनको किसी भी काल मेँ व दिशा मेँ बदलना न पड़े। जब जहाँ जैसा करना उचित है वैसा ही अपने नियमोँ के मुताबिक करता है। इसीलिये वह जगन्नियन्ता कहाता है।

अब यह बताता हूँ कि "इस वर्तमान सृष्टि को कायम हुए विक्रम सम्वत् १९८० तक कितने वर्ष हुए हैँ और कब तक यह कायम रहेगी।" छः मन्वन्तर बीत चुके, जिनके सन्धि सहित १८५२४१६००० वर्ष हुए। यह सातवाँ मन्व-

भा० भा० टीका—जिन सज्जनों ने पहले के अनेक जन्मों में अच्छे अच्छे कर्म्मों का उपार्ज्जन किया है, वे ही इस जन्म में भी धर्म्म के दश लक्षणों का उपभोग करने को उत्सुक (तैयार) होते हैं ॥ ४ ॥

अथ क्रमेण धर्म्मलक्षणवर्णनपरः कवि र्धर्म्मस्याद्य-
लक्षणं धृत्याख्यं वर्णयन्नाह—

विहन्यमाना अपि विघ्नसम्भवै-
र्मुहुर्मुहुः सर्व्वसुखेषु कर्म्मसु ।
प्रयान्ति यत्नेन यतीन्द्रवृत्तयो
धृतिं धरायां हि विवृद्धिसिद्धये ॥५॥

सु० सं० टीका—सर्व्वेभ्यः सुखान्यानन्दोत्पादकानीति सर्व्वसुखानि तेषु सर्व्वसुखेषु सर्व्वेभ्य उपकारकेष्वित्यर्थः । कर्म्मसु क्रियासु "कर्म व्याप्ये क्रियायाञ्च" इति रुद्रः । विघ्नानां अन्तरायाणाम् "विघ्नोऽन्तरायः प्रत्यूहः" इत्यमरः । सम्भवैः रुत्पत्तिभिः "उत्पत्तिरथ सम्भवः" इति शाश्वतः । अनेकाभि-

---

न्तर की अठाईसवीं चतुर्युगी बीत रही है। सत्ताईस चतुर्युगियों के वर्ष ११६६४०००० हुए। इनमें सत्ययुग त्रेतायुग और द्वापरयुग इन तीन युगों के ३८८८००० वर्ष मिलाने से १२०५२८००० वर्ष हुए, चौथे कलियुग के ५०२४ वर्षों को मिलाने से १२०५३३०२४ वर्ष हुए। इन सब वर्षों को ससन्धि छः मन्वन्तरों के १८५२४१६००० वर्षों में मिलाने से १९७२९४९०२४ वर्ष सृष्टि को उत्पन्न हुए होगये और २३४७०५०९७६ वर्ष प्रलय होने में बाकी हैं। तिथि मास वगैरः वैसे ही समझने चाहिये जैसे विक्रम सम्वत् में हैं ।

र्बाधाभि रित्यर्थः। मुहुर्मुहुः भूयोभूयः। विहन्यमाना विह्वलीकृता अपि। यतन्ते ( यती प्रयत्ने इत्यस्माद्भौवादिकाद्धातोः "सर्व्वधातुभ्य इन्" इत्यौणादिकेन इन् प्रत्ययः ) इति यतयः प्रयत्नवन्तस्तेष्विन्द्राः श्रेष्ठाः ( इन्द्रशब्दोऽत्र श्रेष्ठत्ववाचकः ) तेषां वृत्तिरिव वृत्ति र्जीवनम् "वृत्तिर्वर्त्तनजीवने" इत्यमरः। येषां ते यतीन्द्रवृत्तयः पुरुषार्थिनो जनाः। यत्नेन उपायेन। ( सर्व्वोपकारकाणां कर्म्मणां या ) विवृद्धिः समुन्नति स्तस्याः सिद्धये साफल्याय। हि विशेषेण "हिशब्दः स्याद्विशेषार्थे कारणार्थेऽवधारणे" इति शाश्वतः। धरायां पृथिव्याम् धृतिं धैर्य्यम् "धृतिर्योगान्तरे धैर्य्ये धारणाध्वरतुष्टिषु" इति विश्वः। प्रयान्ति प्राप्नुवन्ति धारयन्तीत्यर्थः। न तु विरमन्तीति भावः॥ ५॥

अ० स० टीका—सर्व्वसुखेषु=सब के लिये कल्याणकारी। कर्म्मसु=कर्म्मों ( के करने ) में। विघ्नसम्भवैः=अनेक बाधाओं के द्वारा। मुहुर्मुहुः=वारंवार। विहन्यमानाः=बाधित होते हुए। अपि=भी। यतीन्द्रवृत्तयः=कर्म्मवीर, पुरुषार्थी मनुष्य। यत्नेन =उद्योग से। विवृद्धिसिद्धये=उन्नति की सफलता के लिये। धरायाम्=पृथ्वी पर। धृतिम्=धीरज को। प्रयान्ति=प्राप्त करते हैं, धारण करते हैं॥ ५॥

भा० भा० टीका—सर्व्वहितकारी कामों में तत्पर मनुष्य अनेक बाधाओं के द्वारा वारंवार रोके जाने परभी पृथ्वी पर कर्म्मवीर बन कर कार्य्योन्नति की प्राप्ति के लिये धृति अर्थात् धीरजको धारण करते हैं।

अच्छे कामों के करने में अनेक विघ्नों के उपस्थित होने पर भी हिम्मत नहीं हारना ; यही धर्म्मका पहला लक्षण धृति है ॥ ५ ॥

धर्म्मस्य प्रथमाङ्गभूतं धृत्याख्यं लक्षणं वर्णयित्वा द्वितीयं क्षमाख्यं लक्षणं कथयितुमना आह—

अशक्त-शक्तेषु समानदर्शिनः
कृतापराधेऽपि कृपापरायणाः ।
विमूलयन्तो विगतात्मवृत्तिजं
क्षमाभिधं लक्षणमुद्धरन्त्यहो ॥६॥

सु० सं० टीका—न शक्नुवन्ति नार्हन्ति साधयितुं मनोरथा-नित्यशक्ताः निःसाधनाश्च शक्ताः सर्व्वसाधनसम्पन्नाश्च ते अशक्त-शक्ता स्तेषु । समानं तुल्यं पश्यन्तीति तच्छीलाः समानदर्शिन स्तु-ल्यद्रष्टयो मनुष्याः । कृतोऽपराधो येनासौ कृतापराध स्तस्मि-न्नपि कृपा एव परं अयनं पन्थाः "अयनं पथि सूर्य्यस्याप्युदग्दक्षि-णतो गतौ" इति शाश्वतः । येषां ते कृपापरायणाः दयां दर्श-यितु मुत्सुकाः । विगता प्रस्खलिता आत्मन श्चित्तस्य वृत्तिः सदसद्विवेको यस्य तस्माज्जायत इति विगतात्मवृत्तिज स्तं विगतात्मवृत्तिजं अपराधं विमूलयन्तो निर्म्मूलं कुर्व्वाणाः अर्थाद् अपराधिगतमाधेयभूतमपराधमेव विनाशयन्तो न त्वाधारभूतम-पराधिनम् । तं तु सज्जनतां गमयन्त एव क्षमाभिधं "क्षमा" इति नामकं धर्म्मस्य द्वितीयलक्षणं उद्धरन्ति सम्यक्तया पालयन्तीत्यर्थः ।

अहो ! धन्यास्ते । यत्तदोश्चतुर्थपद्यान्मण्डूकप्लुतिन्यायेनानुवर्त्तनं कार्य्यम् । अर्थस्य सौष्ठवात् । अर्थवशाद्विभक्ति विपरिणस्यते । तेन "ये जना एवं विधं कर्म्म कुर्व्वन्ति त एव धन्याः" इत्यर्थस्य लाभः ॥ ६ ॥

अ० स० टीका—अशक्तशक्तेषु=असमर्थ और समर्थ मनुष्योँ पर । समानदर्शिनः=एकसी नज़र रखनेवाले (और) । कृतापराधे=अपराध ( गुनाह ) करनेवाले पर । अपि=भी । कृपापरायणाः=दया दर्शानेवाले मनुष्य । विगतात्मवृत्तिजम्=नष्टमति मनुष्य से उत्पन्न हुए अपराध को । विमूलयन्तः=मिटाते हुए । क्षमाभिधम्=क्षमा नामक । लक्षणम्=लक्षण का । उद्धरन्ति=उद्धार करते हैँ । अहो=वे धन्य हैँ ॥ ६ ॥

भा० भा० टीका—जो असमर्थ और समर्थ दोन्होँ प्रकार के मनुष्योँ पर एकसी दृष्टि और अपराधी पर भी दया* दर्शानेवाले पुरुष अपराधी के अपराध परक विचारोँ को मिटाते हुए (न कि अपराधी को मिटाते हुए, उसको तो हर एक उपाय से सज्जन बनाते हुए) धर्म्म के क्षमा नामक द्वितीय लक्षण का पालन करते हैँ वे धन्य हैँ ॥ ६ ॥

---

*जिस प्रकार डाक्टर लोग दवाइयोँ के द्वारा रोगी के रोग को मिटाने की इच्छा रखते हैँ न कि रोगी को मिटाने की, वैसे ही सज्जन पुरुष पापी के पापोँ को मिटाने की कोशीस मेँ रहते हैँ। जिस प्रकार दवाई पाकर रोगी चङ्गा हो जाता है उसी प्रकार कृत्रिम भय अथवा सत्योपदेश पाकर पापी (अपराधी) भी आगे पाप करने से रुक कर पापमुक्त (सज्जन) बन जाता है। यही सच्ची दया है।

धर्म्मस्य द्वितीयमङ्गं क्षमाख्यं वर्णयित्वा तृतीयमङ्गं
दमाख्यं दर्शयिष्यन्नाह—

मनोनिरुध्याविषयादकल्मषा
दुरात्मनः प्राणधनापहारिणः ।
समुन्नतं योगयुजां महीभुजां
पदञ्च गच्छन्ति दमेन सत्वरम् ॥७॥

सु० सं० टीका—न विद्यते कल्मषं पापं येषां येषु वा ते अकल्मषाः धर्म्मात्मानो जनाः । आ समन्ताद्विषयाद् दुर्व्यसनान्मनश्चित्तम्, द्वितीयपक्षे—आ विषयाद् समन्ताज्जनपदात् "इन्द्रियार्थे जनपदे विषयो गोचरे पदे" इति शाश्वतः । प्राणांश्च धनानि चापहरन्तीति तच्छीलाः प्राणधनापहारिणस्तांस्तथाभूतान् । दुष्ट आत्मा स्वभावः "अत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्त्तनेऽपि च" इति धरणिः । येषां ते दुरात्मानो निन्द्यस्वभावा स्तान् दुरात्मनश्च । दमेन धर्म्मस्य तृतीयलक्षणेन दमनेन वा "दमः स्यात्कर्दमे दण्डे दमने दमथेऽपि च" इति हेमचन्द्रः । सत्वरं शीघ्रम् । निरुध्य अवरोधयित्वा । पामरजनांस्तु योगिनः सदुपदेशदानेन राजानो दण्डस्वरूपभयप्रदर्शनेन वा । यथाक्रमं योगं परमात्मध्यानम् "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः । युञ्जन्ति प्रयतन्त इति योगयुजो ध्यानपरा योगिन इत्यर्थः । तेषां

योगयुजाम्। महीं पृथिवीं भुञ्जन्ति पिपुरतीति महीभुजो भूपाला-स्तेषां महीभुजाञ्च। समुन्नतं सर्व्वत उत्कृष्टं पदं स्थानम् "व्यव-साये परित्राणे पादतच्चिह्नयोरपि। वस्तुस्थानापदेशेषु पदं स्या-द्वाक्यशव्दयोः" इति शाश्वतः। गच्छन्ति प्राप्नुवन्ति। यथा—सीरध्वज* भर्त्तृहरि† प्रभृतयः ॥७॥

अ० स० टीका—अकल्मषाः=सदाचारी पुरुष। आविषयात्=सम्पूर्ण दुष्ट-व्यसनों से और सम्पूर्ण देश से ( यथा क्रम ) मनः=मन को और। प्राणधनापहारिणः=जान व माल को लूटने वाले। दुरात्मनः=दुष्ट पुरुषों को। दमेन=दम वा दमन नीति के द्वारा। सत्वरम्=जल्दी। निरुद्ध्य=रोक कर। योगयुजाम्=योगियों के। च=और। महीभुजाम्=राजाओं के। समुंन्नतम्=ऊँचे, उत्तम। पदम्=स्थान को। गच्छन्ति=पाते हैं ॥७॥

---

* पुरा मिथिलायां ह्रस्वरोमाख्यः कश्चिदिक्ष्वाकु-वंशोत्पन्नो नृपतिर्बभूव। तस्य द्वौ पुत्रौ सीरध्वजः कुशध्वजश्चेति नामानौ विद्र्येतेस्म। तयोर्मध्ये सीरध्वज एव ज्येष्ठः सकलशास्त्रपारग आसीत्। स खलु स्वकीयां चित्तवृत्तिं विपथान्नीरुरोध। दुष्टानपि सुशासनेन निरुद्ध्य, प्रजानाञ्च पुत्रवत्पालना-त्तेषां जनकत्वमुपागमत्। देशदेशान्तरेभ्यो मुनयस्तत्सकाशाद्ब्रह्मज्ञानस्य प्राप्तये तत्राऽऽजग्मुश्चक्रुः। तस्योपदेशैः परं सन्तोषं गच्छन्तस्ते तं "राज-र्षि" रित्यवादिषुः। अतएवासौ राजर्षिजनको, जनक इत्यादिभिरभिधानै-र्भुवस्तले प्रसिद्धिङ्गतः। विष्णुपुराणे द्रष्टव्यम्।

† भर्त्तृहरेश्चरितं तु सर्व्वत्रैव प्रसिद्धम्। सोऽपि राजर्षिपदमशिश्रियत्। तस्य साक्षिभूतं तन्निर्म्मितं शतकत्रयमिदानीमपि विदुषां दृष्टि पथे सुधांशुरिव पथिकायते।

भा० भा० टीका—सदाचारी, धर्म्मात्मा पुरुष दुष्टव्यसनों से मन को और सम्पूर्ण देश से दुराचारी बदमाशों को ( जो प्रजा के जान व माल को लूटा करते हैं ) दम के द्वारा रोक कर योगियों और राजाओं के उत्तम पद को पाते हैं।

विषय शब्द के अनेक अर्थ होते हैं किन्तु यहाँ दो ही अर्थ "दुर्व्यसन और देश" लिये गये हैं। योगी-जन दुर्व्यसनों से मन को रोक कर ही उत्तम पद को पाते हैं, सदुपदेश द्वारा दुर्जनों को भी सज्जन बना सकते हैं। राजा लोग प्रजा के जान व माल की रक्षा के लिये सम्पूर्ण देश से लुटेरों को दमन नीति के द्वारा रोक कर ही उत्तम राजाओं के पद को पा सकते हैं। भारत में ऐसे अनेक पुरुष हुए हैं, जिन्होंने उभय पद को एक साथ प्राप्त किया। जैसे—सीरध्वज, भर्तृहरि आदि ॥ ७ ॥

धर्म्मस्य तृतीयमङ्गं दमाख्यं दर्शयित्वा कविरस्तेयं चतुर्थं लक्षणं दर्शयितुमना आह—

कलेवरेणापि गिरापि चेतसा
कदापि केषामपि वस्तुसञ्चयम्।
अचोरयन्तो मनुजाः स्वभावतः
पवित्रमस्तेयविधिं वितन्वते ॥८॥

सु० सं० टीका—कलेवरेणापि शरीरेणापि, गिराऽपि वचनेनापि, चेतसा चित्तेनापि, कदापि कस्मिन्नपि काले। केषामपि मनुष्याणामित्यर्थः। वस्तूनां पदार्थानाम् सञ्चयः सङ्ग्रहो वस्तुसञ्चयः पदार्थसमूहस्तं वस्तुसञ्चयम्। अचोरयन्तः चोरयितुं-

नेच्छन्तो मनुजाः स्वभावतः पवित्रं पूतम्, अस्तेयविधिम्। वितन्वते विस्तारयन्ति। धरायामिति शेषः॥

चौरस्य कर्म्म स्वभावो वा चौर्य्यम्, तदेव स्तेयम्, विनाज्ञया केषामपि वस्तूनामुत्थापनम्। तत्तु त्रिभिः प्रकारैर्न्नाभूयते। यथा—

विद्यमानेऽविद्यमाने वा स्वामिनि तदीयामनुमतिं विनैव तद्वस्तूनामन्यत्र नियमनम्, शरीरेण साधयितुं शक्यम्। अतएव कायिकं स्तेयम्। स्वामीहितसाधनेच्छया तु तत्रापि नैष दोषः।

कापट्यमयैर्वचोभिः पुंसः प्रतारयित्वा तेभ्यो द्रव्यसम्पादनं वाचिकं स्तेयम्। तद्यथा—

भो मित्र! इदानीं सूर्य्यादीनां ग्रहाणामतीवभयवाहिनी-दशा भवन्तमभ्येति, अतस्तच्छमयितुमेतन्मितं द्रव्यमत्रानुष्ठाने परमावश्यकम्, तद्भवता साधयितव्यम्। नोचेत्तर्हि भवतो विनाशमयः कालस्तूपस्थित एव। अहं तु केवलं भवदीयं मङ्गलमेवेच्छन्नेवं ब्रवीमि, पश्यतु लम्बकपत्रकेऽस्मिन्यल्लिखितंज्योतिर्विदा! देवी–देवानामपि दृष्टिरीदृश्येव भवन्तं प्रति दरीदृश्यते। इत्यादिकं कर्म्म वचोभिरेव भवितुमर्हति; अतएवेदं वाचिकम्।

द्रव्यलिप्सया कस्यचिद् धनिनः सर्व्वत्र शात्रवमुत्पादनाय मनसा चिन्तनं मानसिकं स्तेयम्। यदा शत्रवः सम्यक्प्रकारेणैनं पीडयेरँस्तदाऽसौ तेभ्यः स्वपरित्राणाय प्रार्थयन् द्रव्यहस्तो मे स-

---

* एवं विधं कर्म्म धूर्त्ता एवात्मानं सर्व्वज्ञं मन्यमाना ज्योतिषिकाः कुर्व्वन्ति न तु यथार्थतत्त्वज्ञाः।

मीपमवश्यमेतु, अहमपि तद्द्रव्यं गृहीत्वा मत्सङ्केतानुवर्त्तिनस्त-दीयान्निपूञ्निन्दयन् तमाश्वासयिष्यामीति ।

एतत्प्रकारकाणि गर्हितकर्म्माणि न कर्त्तव्यानीति भावोऽस्ते-यम् । तत्फलं सर्व्वत्रप्रतिष्ठोपादानम् ॥८॥

अ० सं० टीका —कलेवरेण=शरीर से । अपि=भी । गिरा=वाणी से । अपि=भी, और । चेतसा=मन से भी । कदापि=किसी भी समय में । केषाम्=किसी के । अपि=भी । वस्तुसञ्चयम्=पदार्थ-समूह को । अचोरयन्तः=नहीं चुराते हुए । मनुजाः=मनुष्य । स्वभावतः=स्वभाव ही से । पवित्रम्=पवित्र । अस्तेय-विधिम्=चोरी त्याग के विधान का । वितन्वते=विस्तार करते हैं ॥८॥

भा० भा० टीका—शरीर से वाणी से एवं मन से किसीकी भी वस्तुओं को न चुराते हुये मनुष्य स्वभाव ही से पवित्र अस्तेव ( चोरी त्याग ) के विधान का विस्तार करते हैं । अर्थात् चोर कर्म न करना ही अस्तेय है ।

आज्ञा के विना किसी की मी वस्तु को उठा लेना चोरी है, धूर्त्त लोग तीन प्रकार से इस कार्य को करते हैं जैसे—

१ मालिक की उपस्थिति में अथवा अनुपस्थिति में उस की आज्ञा के विना ही किसी भी उपाय से उस की वस्तुओं को अपने अधिकार में कर लेना यह कायिक चोरी है ।

यदि वस्तु विनाश के भय से स्वामी का हित चाहता हुआ कोई उस वस्तु को किसी सुरक्षित स्थान में रख दे तो वह चोरी नहीं कही जाती ।

२ कपट वचनों से मूर्खों को जाल मे फाँसकर धन उपार्ज्जन करना वाचिक चोरी है, जैसे—

हे मित्र! आजकल सूर्य्यादि ग्रहों की महा भयङ्कर दशा आपको प्राप्त हुई है, इसकी शान्ति के लिये इतने धन की आवश्यकता है, आप जल्दी प्रबन्ध करें; नहीं तो यह विनाशमय काल आपके सामने उपस्थित ही है। मैं तो केवल आपकी भलाई के लिये ही यह सूचना दे रहा हूँ। विश्वास न हो तो इस लम्बक-पत्रक में देखिये, जो ज्योतिषीजी ने कई कलमों का नाक तोड़कर बड़े परिश्रम से लिखा है! और देवी देवताओं की दृष्टि भी आप पर ऐसी ही जान पड़ती है! इत्यादि निन्दित कर्म अपने आपको सर्व्वज्ञ माननेवाले ज्योतिष्कुठार किया करते हैं न कि सच्चे ज्योतिषी।

३ धन संग्रह करने के लालच से किसी धनी पुरुष के लिये सब तरफ से शत्रुता उत्पन्न कराने का विचार मन में लाना और वैसा ही करना, यह मानसिक चोरी है। जब चारों ओर से शत्रु इसको तङ्ग करेंगे, तब यह द्रव्य हाथ में लेकर अपनी रक्षा के लिये प्रार्थना करता हुआ मेरे पास अवश्य आएगा, फिर मैं इससे द्रव्य लेकर, मेरे नियुक्त किये हुए जो इसके शत्रु हैं, उनकी निन्दा करता हुआ इसको आश्वासन देऊँगा।

यह तो चोरियों का दिग्दर्शन मात्र दर्शाया है, इसके अतिरिक्त भी अनेक उपाय धूर्त्त लोग काम में लाया करते हैं, जिनका अन्तर्भाव इन तीन्हों मे हो जाता है। सज्जन पुरुष उनसे बचते रहें। चौर कर्म न करने से सब जगह इज्जत मिलती है ॥ ८ ॥

धर्म्मस्य तूर्य्यलक्षणमस्तेयं कथयित्वा कविःपञ्चमं
शौचाख्यं लक्षणं वर्णयन्नाह—

मनस्तु सत्येन जलेन विग्रहं
सुविद्ययाऽऽत्मानमथो तपस्यया।

मीपमवश्यमेतु, अहमपि तद्द्रव्यं गृहीत्वा मत्सङ्केतानुवर्त्तिनस्त-
दीयान्निपूनिन्दयन् तमाश्वासयिष्यामीति।

एतत्प्रकारकाणि गर्हितकर्म्माणि न कर्त्तव्यानीति भावोऽस्ते-
यम्। तत्फलं सर्व्वत्रप्रतिष्ठोपादानम् ॥८॥

अ० सं० टीका —कलेवरेण=शरीर से। अपि=भी। गिरा=
वाणी से। अपि=भी, और। चेतसा=मन से भी। कदापि=किसी
भी समय में। केषाम्=किसी के। अपि=भी। वस्तुसञ्चयम्=
पदार्थ-समूह को। अचोरयन्तः=नहीं चुराते हुए। मनुजाः=मनु-
ष्य। स्वभावतः=स्वभाव ही से। पवित्रम्=पवित्र। अस्तेय-
विधिम्=चोरी त्याग के विधान का। वितन्वते=विस्तार करते
हैं ॥८॥

भा० भा० टीका—शरीर से वाणी से एवं मन से किसीकी भी वस्तु-
ओं को न चुराते हुये मनुष्य स्वभाव ही से पवित्र अस्तेव ( चोरी त्याग ) के
विधान का विस्तार करते हैं। अर्थात् चोर कर्म न करना ही अस्तेय है।

आज्ञा के विना किसीकी भी वस्तु को उठा लेना चोरी है, धूर्त्त लोग तीन
प्रकार से इस कार्य को करते हैं जैसे—

१ मालिक की उपस्थिति में अथवा अनुपस्थिति में उस की आज्ञा के
विना ही किसी भी उपाय से उस की वस्तुओं को अपने अधिकार में कर
लेना यह कायिक चोरी है।

यदि वस्तु विनाश के भय से स्वामी का हित चाहता हुआ कोई उस
वस्तु को किसी सुरक्षित स्थान में रख दे तो वह चोरी नहीं कही जाती।

२ कपट वचनों से मूर्खों को जाल मे फाँसकर धन उपार्ज्जन करना वाचिक
चोरी है, जैसे—

हे मित्र! आजकल सूर्य्यादि ग्रहों की महा भयङ्कर दशा आपको प्राप्त हुई है, इसकी शान्ति के लिये इतने धन की आवश्यकता है, आप जल्दी प्रबन्ध करें; नहीं तो यह विनाशमय काल आपके सामने उपस्थित ही है। मैं तो केवल आपकी भलाई के लिये ही यह सूचना दे रहा हूँ। विश्वास न हो तो इस लम्बक-पत्रक में देखिये, जो ज्योतिषीजी ने कई कलमों का नाक तोड़कर बड़े परिश्रम से लिखा है! और देवी देवताओं की दृष्टि भी आप पर ऐसी ही जान पड़ती है! इत्यादि निन्दित कर्म अपने आपको सर्व्वज्ञ माननेवाले ज्योतिष्कुठार किया करते हैं न कि सच्चे ज्योतिषी।

३ धन संग्रह करने के लालच से किसी धनी पुरुष के लिये सब तरफ से शत्रुता उत्पन्न कराने का विचार मन में लाना और वैसा ही करना, यह मानसिक चोरी है। जब चारों ओर से शत्रु इसको तङ्ग करेंगे, तब यह द्रव्य हाथ में लेकर अपनी रक्षा के लिये प्रार्थना करता हुआ मेरे पास अवश्य आएगा, फिर मैं इससे द्रव्य लेकर, मेरे नियुक्त किये हुए जो इसके शत्रु हैं, उनकी निन्दा करता हुआ इसको आश्वासन देऊँगा।

यह तो चोरियों का दिग्दर्शन मात्र दर्शाया है, इसके अतिरिक्त भी अनेक उपाय धूर्त्त लोग काम में लाया करते हैं, जिनका अन्तर्भाव इन तीन्हों मे हो जाता है। सज्जन पुरुष उनसे बचते रहें। चौर कर्म न करने से सब जगह इज्जत मिलती है ॥ ८ ॥

धर्म्मस्य तूर्य्यलक्षणमस्तेयं कथयित्वा कविःपञ्चमं
शौचाख्यं लक्षणं वर्णयन्नाह—

मनस्तु सत्येन जलेन विग्रहं
सुविद्ययाऽऽत्मानमथो तपस्यया।

धियञ्च मोक्षैकधिया मनीषिणो
विशौचयन्तो हि भजन्ति शौचताम् ॥४॥

सु० सं० टीका—सत्येन यथार्थमन्तव्येन वक्तव्येन च मनश्चित्तम्। जलेन पानीयेन विग्रहं शरीरम् "विग्रहो युधि विस्तारे प्रविभागशरीरयोः" इति हेमचन्द्रः। सुष्ठु विद्या सुविद्या सांसारिकाणां पदार्थानामसंशयात्मकं ज्ञानम्; तया सुविद्यया। अथो अपि च "अथाथो संशये स्यातामधिकारे च मङ्गले। विकल्पानन्तरप्रश्नकार्त्स्न्यारम्भसमुच्चये" इति मेदिनी। तपस्या यमनियमानामनुष्ठानम्। ( यमनियमा स्त्विमे—

"ब्रह्मचर्य्यं दया क्षान्तिर्ध्यानं सत्यमकल्कता।
अहिंसाऽस्तेयमाधुर्य्ये दमश्चेति यमाः स्मृताः ॥"

इति याज्ञवल्क्यः।

ब्रह्मचर्य्यम् यज्ञोपवीतमाधायेन्द्रियनिग्रहपूर्व्वकं न्यूनातिन्यूनं वर्षविंशतिसमाप्तिपर्य्यन्तं गुरुकुलसेवनम्। दया अनुकम्पा। क्षान्तिः क्षमा। ध्यानं परमात्मचिन्तनम्। सत्यं यथार्थानुमोदनम्। अकल्कता कुटिलताया अभावः। अहिंसा सर्व्वेभ्योऽभयदानम्। अस्तेयं चौरकर्म्मस्य त्यागः। माधुर्य्यं कोमलस्वभावेन वर्त्तनम्। दमश्चेतसो दुर्व्यसनान्निरोधः। एते यमाः। अतो नियमाः—

"स्नानंमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः।
नियमो गुरुशुश्रूषा शौचाक्रोधाप्रमादताः ॥"

इति याज्ञवल्क्यः।

स्नानं जलादिभिः शारीरिकशुद्धिः। मौनं वाक्संयमनम्। उपवासो लङ्घनम्, उदरेऽन्नस्य सम्यक्तया पचनं न भवेत्तदा भोजनं न कुर्य्यादिति भावः। इज्या यजनम्, अहिंसात्मकयागः विदुषां माननीयानां वृद्धानां गृहे स्थितानां पित्रादीनाञ्च सत्कारो वा। स्वाध्यायो वेदादिशास्त्राणां परिशीलनम्। उपस्थनिग्रहो मूत्रेन्द्रियं वशमानेतुं कौपीनधारणम्। गुरुशुश्रूषा गुरोः सेवनम्, गुरुशब्देन माता पिता आचार्य्यश्चेते ग्राह्याः। शौचं पवित्रता। अक्रोधः शान्तिः, वैरत्यागः। अप्रमादता अनुत्पातत्वं सुशीलत्वमित्यर्थः। एते नियमाः) तया तपस्यया चात्मानम्। मोक्षैकधिया ज्ञानेन "मोक्षे धीर्ज्ञानम्" इत्यमरः। धियं बुद्धिम्। विशौचयन्तः पवित्रतां गमयन्तः। मनीषिणो बुद्धिमन्तः। हि निश्चयेन। शौचतां शौचस्य धर्म्मपञ्चमलक्षणस्य भावम्। भजन्ति सेवन्ते। यथाह मनुः—

अद्भिर्गात्राणिशुद्ध्यन्ति मनः सत्येन शुद्ध्यति।
विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुद्ध्यति ॥६॥

अ० स० टीका—सत्येन=सत्य से। तु=तो। मनः=चित्त को। जलेन=जल से। विग्रहम्=शरीर को। सुविद्यया=सांसारिक पदार्थों के सन्देह रहित ज्ञान से। अथो=और। तपस्यया=तप अर्थात यम नियमों के पालन से। आत्मानम्॥ देहस्थित जीवात्मा को। मोक्षैकधिया=ज्ञान से। धियम्=बुद्धि को। विशौचयन्तः=पवित्र करते हुए। मनीषिणः=बुद्धिमान् पुरुष। हि=ही। शौचताम्=शौच नामक पञ्चम लक्षण के भाव को। भजन्ति=पालते हैं ॥ ६ ॥

भा० भा० टीका—सही सही कहना और करना सत्य कहाता है, इससे मन की शुद्धि होती है। जल से शारीरिक शुद्धि होती है। सांसारिक पदार्थों को अच्छी तरह जान लेना ही विद्या है और यम नियमों का बराबर पालन करना ही तप है। विद्या और तप से आत्मा (जो शरीर में रहनेवाला जीव है वह) शुद्ध होता है। ज्ञान से बुद्धि पवित्र होती है। इन सब को शुद्ध रखनेवाले बुद्धिमान् पुरुष ही शौच लक्षण का पालन करते हैं, वे शुद्ध हैं, और यही सच्ची शुद्धि है।

अब यम नियम गिनाये जाते हैं, यम दश हैं उनके नाम ये हैं-ब्रह्मचर्य्य= यज्ञोपवीत धारण करके इन्द्रियनिग्रह का पालन करते हुए कम से कम २० वर्ष तक गुरुकुल में विद्याभ्यास करते रहना। दया=सबके साथ मेहर्बानी* का वर्त्ताव रखना। क्षान्ति=क्षमा, मुआफी। ध्यान=ईश्वर स्मरण। सत्य=सही सही कहना और करना। अकल्कता=कुटिलता का त्याग। अहिंसा=किसी को भी नहीं सताना, सबको अभयदान देना। अस्तेय=किसी की भी वस्तु को नहीं चुराना। माधुर्य्य=सबके साथ मीठेपन से पेश आना। दम=दुर्व्यसनों से मन को रोकना।

नियम ग्यारह हैं उनके नाम ये हैं—स्नान=जल से शरीर को मलमल कर साफ करना। मौन=वाणी को वश में रखना, जरूरत से ज्यादः नहीं बोलना। उपवास=लंघन, जब तक पेट में खाया हुआ न पचे तब तक भोजन नहीं करना। इज्या=अहिंसात्मक यज्ञ, माता, पिता, आचार्य्य और माननीय पुरुषों का सत्कार करना। उपस्थनिग्रह=मूत्रेन्द्रिय को वश में रखने के लिये लंगोट कसना। गुरुशुश्रूषा=माता पिता और आचार्य्य की सेवा करना। शौच=पवित्रता। अक्रोध=गुस्से नहीं होना। अप्रमादता=नटखट पने का त्याग।

उक्त यम नियमों का पालन ही सच्ची तपस्या है॥

---

* पृष्ठ १५ वें की टिप्पणी देखो।

धर्म्मस्य पञ्चमलक्षणं शौचाख्यं वर्णयित्वा कविः
षष्ठमिन्द्रियनिग्रहं वर्णयन्नाह—

स्वभावजं यद्विपथेऽवगाहनं
तदिन्द्रियाणाञ्च निरुद्धय वर्णिनः ।
नियोजयन्तो विधिबोधितेध्वनि
सदैन्द्रियं निग्रहमत्र बिभ्रति ॥१०॥

सु० सं० टीका—द्विविधानीन्द्रियाणि ज्ञानेन्द्रियाणि कर्म्मेन्द्रियाणि च, तेषां मध्ये पञ्च (श्रोत्रं, त्वक्, चक्षुषी, जिह्वा, नासिकेति) ज्ञानेन्द्रियाणि। पञ्च च (पायुः, उपस्थं, हस्तौ, पादौ, वागिति) कर्म्मेन्द्रियाणि। एतेषां विपथे कुमार्गे यद् अवगाहनं प्रवेशः (तत्) स्वभावजं स्वाभाविकम्। तत्सदा निरुद्धय निरोधयित्वा। विधिना परमेश्वरेण बोधित उपदिष्टो विधिबोधितो वेद स्तस्मिन्विधिबोधिते। अध्वनि मार्गे वैदिके पथीत्यर्थः। नियोजयन्तः प्रेरयन्तः। वर्णिनो ब्रह्मचारिणः "वर्णी स्याल्लेखके चित्रकरेऽपि ब्रह्मचारिणि" इति विश्वः। अत्र अस्मिन् भूतले। इन्द्रियाणाम् अयम् ऐन्द्रियम्। निग्रहं निरोधम् "निग्रह स्तु निरोधः स्यात्" इत्यमरः। बिभ्रति पोषयन्तीत्यर्थः। अत्र कारणमाह मनुः—

इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमे यत्नमातिष्ठेद्विद्वान्यन्तेव वाजिनाम् ॥

अस्य श्लोकस्यायमभिप्रायः—इन्द्रियाण्येवाश्वाः, मनश्चाभी-

षवः, शरीरमेव स्यन्दनम्, जीवश्च सारथिः। यथा सारथेरसावधानतया मुञ्चिताभीषवो मदोन्मत्ता वाजिनः स्यन्दनमुद्घातिनीं भूमिं नेनीयन्ते, तथैवेन्द्रियाण्यपि मनसः शैथिल्येन शरीरं कुमार्गे स्वे स्वे विषये नेनीयन्त्येव। अतो वाजिनां यन्तेव विद्वानिन्द्रियाणामवरोधने यत्नं कुर्य्यादिति। एष्विन्द्रियेष्वासक्त्यनासक्त्योः फलमाह मनुः—

"इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्।
सन्नियम्य तु तान्येव ततः सिद्धिं नियच्छति॥

इन्द्रियाणां प्रसङ्गेन विषयेष्वासक्त्या दोषं दुर्गतिं ऋच्छति प्राप्नोति, नास्त्यत्र सन्देहः। ततः अस्माद्धेतोस्तानीन्द्रियाणि सन्नियम्य सम्यक्प्रकारेणनिरुद्ध्य एव यथासुखं सिद्धिं समुन्नतिं नियच्छति समधिगच्छतीत्यर्थः॥१०॥

अ० स० टीका—इन्द्रियाणाम्=इन्द्रियों का। विपथे=कुमार्ग में। यद्=जो। अवगाहनम्=जाना, प्रवेश। स्वभावजम्=स्वाभाविक है। तद्=उसको। सदा=हमेशा। निरुद्ध्य=रोक कर। विधिवोधिते=परमात्मा के बताये हुए (वैदिक)। अध्वनि=मार्ग में। नियोजयन्तः=प्रेरणा करते हुए। वर्णिनः=ब्रह्मचारी लोग। अत्र=इस पृथ्वी पर। ऐन्द्रियम्=इन्द्रियों के। निग्रहम्=अवरोधन को। विभ्रति=पालन करते हैं॥१०॥

भा० भा० टीका—इन्द्रियें दो प्रकार की होती हैं अर्थात् ज्ञानेन्द्रियें और कर्म्मेन्द्रियें। जिनके द्वारा ज्ञान प्राप्त होता है वे (आँखें, नाक,

कान, जिह्वा, और त्वचा-शरीर के चमड़े का ऊपरी भाग ये) पाँच ज्ञानेन्द्रियें हैं। जिनके द्वारा कर्म्म किये जाते हैं वे (गुदा, उपस्थ—स्त्रीत्वपुरुषत्वबोधक गुप्तचिह्न, हाथ, पैर और वाक्, ये) पाँच कर्म्मेन्द्रियें हैं।

इनका कुमार्ग में जाना स्वाभाविक ही है, इस लिये इन्हें कुमार्ग से हटा कर सदा सुमार्ग अर्थात् ईश्वर के बताये हुए वैदिक कर्म्मों में नियुक्त करते हुए सच्चे ब्रह्मचारी ही इन्द्रियनिग्रह नामक छठे लक्षण का पालन करते हैं। इसका कारण रूपक द्वारा मनुजी यों दर्शाते हैं—

ये इन्द्रियें मानो घोड़े हैं, मन लगाम, शरीर रथ, और जीवात्मा सारथी। जैसे सारथी की असावधानी से छूटी हुई लगाम वाले पागल घोड़े रथ को उथल पुथल धरती में लिये जाते हैं, वैसे ही इन्द्रियें भी लगाम रूपी मन के कमज़ोर पड़ने से शरीर को अपने २ दुर्व्यसनों की ओर घसीटना चाहती हैं। इस लिये विद्वानों को चाहिये कि होशियार कोचवान की तरह होकर इन्द्रियों को अपने वश में रखने का भरपूर उपाय करें। इन्द्रियों के वश में होकर मनुष्य बहुत दुःख पाता है, भारी दुर्गति होती है और इनको अपने वश में रखने से बहुत सुख पाता है, मज़बूत बना रहता है, खूब तरक्की होती है। इस लिये इनको अपने वश में रखना चाहिये, न कि इनके वश में रहना ॥१०॥

धर्म्मस्य षष्ठमङ्गमिन्द्रियनिग्रहं दर्शयित्वा सप्तममङ्गं
"धी" रिति नामकं वर्णयिष्यन्नाह—

समागते स्वात्मनि संशयोद्भवे
तदुद्विनाशाय विवेचनात्मिका-।
सुभावनाया अपि शुद्धकारणं
तदुच्यते धी रिति दीर्घदर्शिभिः ॥११॥

सु० सं० टीका—स्वस्य आत्मा चित्तम् "आत्मा कलेवरे

यत्ने स्वभावे परमात्मनि। चित्ते धृतौ च बुद्धौ च परव्यावर्त्तनेऽपि च॥" इति धरणिः। स्वात्मा तस्मिन्संशयस्य सन्देहस्य (यः) उद्भवः प्रादुर्भावस्तस्मिन्संशयोद्भवे समागते सम्प्राप्ते (सति)। तस्य संशयोद्भवस्य उत्कृष्टो विनाशस्तद्धुद्विनाशस्तस्मै विवेचनात्मिका निर्णयपरा (या) सुष्ठुभावना सुभावना सुन्दरविचारस्तस्या-विवेचनात्मिकासुभावनायाः अपि शुद्धं पवित्रञ्च ( यत् ) कारणं हेतुः शुद्धकारणम्, तदेव धीः प्रज्ञा, इति एवम्। दीर्घं विस्तृतं सम्यक्प्रकारेणेत्यर्थः, पश्यन्तीति "दृशिर् प्रेक्षणे" इत्यस्माद्भौवादिकाद्धातोर्ग्रह्यादित्वान् "णिनिः" दीर्घदर्शिन स्तैर्दीर्घदर्शिभिः पण्डितैः। उच्यते निगद्यते॥ ११॥

अ० स० टीका---स्वात्मनि=अपने मन में। संशयोद्भवे=सन्देह का प्रादुर्भाव। समागते=होने पर। तद्धुद्विनाशाय=उसको मिटाने के लिये। विवेचनात्मिकासुभावनायाः=निर्णय करने वाली सुन्दर भावना का। अपि=भी। शुद्धकारणम्=जो शुद्ध कारण है। तत्=वही। धीः=बुद्धि है। इति=ऐसा। दीर्घदर्शिभिः=विद्वान् पुरुष। उच्यते=कहते हैं।

भा० भा० टीका—अपने मन में संशय के उत्पन्न होने पर संशय को मिटाने के लिये निर्णय करनेवाली सुन्दर भावना का जो शुद्ध कारण (हेतु) है, उसे ही विद्वज्जन धी कहते हैं।

एवं सप्तमलक्षणं धीराख्यं वर्णयित्वा विद्याख्यमष्टमं लक्षणं वर्णयितुमना आह—

भवेऽद्भुतानेकपदार्थसङ्ग्रहो-
　　पलब्धविज्ञानमसंशयात्मकम् ।
अतत्थ्यतत्थ्यैकविवेकवर्द्धनं
　　तदेव विद्येति बुधैर्निगद्यते ॥१२॥

सु० सं टीका—भवे संसारे। अतत्थ्यस्य अनृतस्य, तत्थ्यस्य सत्यस्य चैकः केवलम् "एकं सङ्ख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु" इति मेदिनी, विवेको विचारः "विवेकः स्याज्जलद्रोण्यां पृथग्भावविचारयोः" इति मेदिनी, तं वर्द्धयति विस्तारयतीति तद्—अतत्थ्यतत्थ्यैकविवेकवर्द्धनम् । न विद्यते संशय आत्मनि यत्ने "आत्मा कलेवरे यत्ने" इति धरणिः। यस्य तद् असंशयात्मकम्। अद्भुतो विस्मयोत्पादकः अनेकानां पदार्थानां (यः) संग्रहः समूहस्तस्मादुपलब्धं प्राप्तं (यद्) विज्ञानं तद्-अद्भुतानेकपदार्थसंग्रहोपलब्धविज्ञानम्, सांसारिकपदार्थानां यथार्थज्ञानमित्यर्थः। तदेव "विद्या" इति अनेन प्रकारेण। बुधैः पण्डितैः निगद्यते कथ्यते ॥१२॥

अ० स० टीका--भवे=संसार में । अतत्थ्यतत्थ्यैकविवेकवर्द्धनम्=सत्यासत्य के विवेक को बढ़ानेवाला। असंशयात्मकम्=सन्देह रहित। अद्भुतानेकपदार्थसङ्ग्रहोपलब्धविज्ञानम्=आश्चर्य्योत्पादक असङ्ख्य पदार्थों के समूह से प्राप्त हुआ जो ज्ञान है। तदेव=वही। विद्या धर्म्म का विद्या नामक आठवाँ लक्षण है। इति=इस प्रकार। बुधैः=विद्वान् लोग। निगद्यते=कहते हैं ॥१२॥

भा० भा० टीका—संसार में आश्चर्य्योत्पादक अनेक पदार्थ हैं, उनसे उपलब्ध जो सन्देह रहित ज्ञान अर्थात् उन पदार्थों के यथार्थ स्वरूप एवं गुणों की जानकारी, वही विद्या है, ऐसा विद्वानों का कथन* है ॥१२॥

धर्म्मस्य विद्याख्यमष्टममङ्गं विवर्ण्य नवमं सत्याख्यं लक्षणं कथयिष्यन्नाह—

पदार्थकानां विधिकल्पिता व्रजे
पृथक्पृथक्त्वेन तु धर्म्मकल्पना ।
यथायथं धर्म्मिगतस्य वर्णनं
प्रकीर्त्तितं सत्यमिहैव सज्जनैः ॥१३॥

---

* मुण्डकोपनिषद् में विद्या के दो भेद कहे हैं, अर्थात् अपरा और परा।

१ अपरा में ऋग्वेद, यजुर्वेद, सामवेद अथर्ववेद और इनके अङ्ग, जैसे—शिक्षा, कल्प, व्याकरण, निरुक्त, छन्द और ज्योतिष ( पोपलीला नहीं किन्तु गणित), इनका स्वाध्याय करना।

२ परा में वेदादि स्वाधाय पूर्वक पदार्थ-ज्ञानानन्तर परब्रह्म परमात्मा को प्राप्ति का साधन है, जैसा कि वेदादि शास्त्रों में दर्शाया है।

और जो चौदह विद्याएँ कही जाती हैं उनका अन्तर्भाव उक्त दोनों विद्याओं में हो जाता है इसलिये उनको इन दोनों से भिन्न नही समझना चाहिये। देखो विष्णुपुराण—

अङ्गानि वेदाश्चत्वारो मीमान्सान्यायविस्तरः।
धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश॥

इन सब विद्याओं का संबन्ध केवल पदार्थ-ज्ञान से है, जैसा कि मूल व टीका में वर्णित है।

सु० सं० टीका—पदार्थकानाम् "स्वार्थेकन्" वस्तूनाम्। व्रजे समूहे। पृथक्पृथक्त्वेन भिन्नभिन्नप्रकारैः। धर्मस्य विशेष-पदार्थस्य "अयं पदार्थोऽस्मात्पदार्थाद्भिन्नः" एतत्प्रकारकं ज्ञानं यस्मादुपलभ्यते स एव धर्म्मशब्देन व्यपदिश्यते, स खलु भिन्नभिन्न-पदार्थेषु भिन्नभिन्नस्वरूपेणावतिष्ठते, तस्य कल्पना व्यवस्था, स्प-ष्टीकरणमित्यर्थः। तु विधिना परमेश्वरेण कल्पिता सम्भावितैव। अतएव धर्म्मोऽस्यास्तीति धर्म्मी पदार्थः, तस्मिन्गतः स्थितो धर्म्मः स्वरूपं पदार्थत्वमित्यर्थः। तस्य धर्म्मिगतस्य पदार्थस्वरूपस्ये-त्यर्थः। यथायथं यथादृष्टं श्रुतं वा प्रत्यक्षादिभिः प्रमाणैः परी-क्षितं यादृशं स्वात्मनि स्थितं भवेत् तादृशमेव वर्णनं अन्तःकरण तो बहिः प्रकाशनम्। इह अस्मिन् महीतले। सज्जनैः आर्य्यपुरुषैः "सत्यं" इति प्रकीर्त्तितं कथितमित्यर्थः॥ १३॥

अ० स० टीका—पदार्थकानाम्=पदार्थों के। व्रजे=समूह में। पृथक्पृथक्त्वेन=अलग २ भावों से। धर्मकल्पना=स्वरूप एवं गुणों की स्पष्टता। तु=तो। विधिकल्पिता=परमात्मा ने कर ही रक्खी है (अतएव)। धर्म्मिगतस्य=पदार्थ में रहने-वाले स्वरूप वा गुण का। यथायथम्=ठीक ठीक। वर्णनम्=बयान करना। एव=ही। सज्जनैः=श्रेष्ठ पुरुषों ने। इह=इस लोक में। सत्यम्=सत्य, धर्म्म का नौवाँ लक्षण। प्रकी-र्त्तितम्=कहा है॥ १३॥

भा० भा० टीका—परमात्मा ने पदार्थों के समूह में भिन्न २ प्रकार से धर्म्म कल्पना अर्थात् पदार्थ में रहने वाले पदार्थत्व की स्पष्टता तो कर ही

रक्खी है, जिससे यह जाना जाता है कि "यह पदार्थ इस पदार्थ से भिन्न है" यही पदार्थगत धर्म्म है, और धर्म्म जिसमें रहता है वही धर्म्मी कहलाता है। धर्म्म पदार्थ ही में रहता है, इस लिये पदार्थ हुआ धर्म्मी। और पदार्थ में रहने वाला धर्म्म, पदार्थत्व, अर्थात् पदार्थ का स्वरूप एवं गुण है। जिस पदार्थ* में जैसा स्वरूप और गुण हो, उसके लिये वैसा ही अपने मन में समझना और कहना, विपरीत कल्पना नहीं करना, बस यही सज्जनों ने "सत्य" बताया है ॥१३॥

धर्मस्य नवमं सत्याख्यमङ्गं प्रदर्श्य दशममङ्गमक्रोधाख्यं प्रदर्शयितुमना आह—

दुरात्मदुर्वृत्तिसमुत्थवैरतः
समेतिकोपोपि मनःसु धीमताम्
अतोऽस्पृशन्तस्तमजातशत्रवः
प्रशान्तमक्रोधमुपासते बुधाः ॥१४॥

---

* पदार्थ तीन हैं, अर्थात् एक ईश्वर, द्वितीय जीव और तृतीय प्रकृति। इन्हीं तीन्हों को नित्य अर्थात् हमेशा कायम रहने वाले पदार्थ भी कहते हैं।

१ ईश्वर--अनादि, अनन्त, अजन्मा, अमर, सर्वशक्तिमान, सर्वेश्वर, सर्वपोषक, न्यायकारी, दयालु, सर्वज्ञ, सर्वनियन्ता, अद्वितीय अर्थात् एक, सर्वव्यापक, निराकार, सच्चिदानन्दादिलक्षणयुक्त और सब जीवों को उनके किये हुए कर्मों के अनुसार फल देने वाला है। वेदों में विशेषतः ओ३म् शब्द से संबोधित है जिस में ऊपर कहे हुए संपूर्ण अर्थों का समावेश हो जाता है।

२ जीव--इच्छा, द्वेष, सुख और दुःखों का भोक्ता, अल्पज्ञ, नित्य, अनेक, प्रतिशरीर भिन्न, कर्म करने में स्वतन्त्र और फल भोगने में परतन्त्र हैं।

सु० सं० टीका—दुष्ट आत्मा मनो येषां ते दुरात्मानो दुर्ह्न-मनुष्यास्तेषां दुष्टा वृत्ति दुर्वृत्तिः, निन्द्यव्यवहार स्तस्याः समुत्थं प्रोत्थितम्, उत्पन्नमित्यर्थः (यद्) वैरं विरोधः "वैरं विरोधो विद्वेषः" इत्यमरः, तद् दुरात्मदुर्वृत्तिसमुत्थवैरम्, तस्माद् दुरात्म-दुर्वृत्तिसमुत्थवैरतः। धीमतां मनीषिणाम्। अपि। मनःसु चित्तेषु। कोपः क्रोधः। समेति समुत्पन्नो भवतीत्यर्थः। अतः अस्मा-द्धेतोः। तं क्रोधम्। अस्पृशन्तः अनुत्पादयन्तः दूरस्थिता एवेत्यर्थः। अजाताः अनुत्पन्नाः शत्रवो येषां ते—अजातशत्रवः सर्वसुहृद-इत्यर्थः। वुधाः पण्डिताः "वुधः सौम्ये च पण्डिते" इति मेदिनी। प्रशान्तं शान्तिमयम्। न क्रोधोऽक्रोधस्तमक्रोधं क्रोधस्याभावम्, सन्तोषमित्यर्थः। उपासते सेवन्ते प्राप्नुवन्तीत्यर्थः। तत्फलं तु सर्व्वत्र प्रीतिभाजनत्वोपलब्धिः॥ १४॥

अ० स० टीका—दुरात्मदुर्वृत्तिसमुत्थवैरतः=बदमाश लोगों के दुष्ट व्यवहार से उत्पन्न हुए वैमनस्य के कारण। धीमताम्=

---

१ प्रकृति—जड़ पदार्थ, जो अपने आप कुछ न कर सके किन्तु अन्य उसको काम में लेकर लाभ उठा सकते हैं, माया।

प्रकृति के दो भेद हैं।

१ कारणरूपाप्रकृति—नित्या, परमाणुरूपा, और कार्य्यरूपप्रकृति का उपादान कारण है।

२ कार्य्यरूपाप्रकृति—अनित्या, अनेकरूपा, ऐन्द्रियविषय, जैसे—रूप, रस, गन्ध, स्पर्श और शब्द, अर्थात् सम्पूर्ण जगत्। कारणरूप-प्रकृतिजन्य पदार्थों का ही नाम कार्य्यरूपप्रकृति है। पदार्थों का विशेष विवरण मत्प्रणीत "महेशमहिमवर्णन" नामक काव्य में देखिये।

बुद्धिमानों के। मनःसु=मन में। अपि=भी। कोपः=क्रोध। समेति =उत्पन्न हो ही जाता है। अतः=इसलिये। तम्=उस क्रोध को। अस्पृशन्तः=न छूते हुए अर्थात् अपने मन में पैदा न होने देते हुए। अजातशत्रवः=सबके मित्र। बुधाः=पण्डित जन। प्रशान्तम्=शान्तिमय। अक्रोधम्=गुस्से का त्याग, जो धर्म्म का दशवाँ लक्षण है उस को, उपासते=पालते हैं॥ १४॥

भा० भा० टीका—बदमाश मनुष्यों के दुष्ट व्यवहार से उत्पन्न हुए वैमनस्य के कारण बुद्धिमानों के मन में भी क्रोध आ ही जाता है, इसलिये सज्जन पुरुष तो उस क्रोध से सदैव दूर रहते हुए शान्तिमय अक्रोध * (जो धर्म्म का एक अङ्ग है उस) का पालन किया करते हैं जिसका फल यही है कि वे सब जगह प्रीति के पात्र बन जाते हैं॥ १४॥

---

* अक्रोध का अर्थ यह कदापि नहीं है कि कोई निर्दयी हम पर मनमाने अत्याचार करते रहें और हम चुपचाप सह लिया करें। अत्याचारों का चुपचाप सह लेना भी अधर्म्म है। अत्याचारों का मूलोच्छेदन करने के लिये प्रत्येक स्वात्माभिमानी धर्म्मात्मा को प्रतिक्षण तत्पर रहना चाहिये, तथापि क्रोध के वशीभूत होकर नहीं; बल्कि शान्तिमय उपायों से।

यदि सम्पूर्ण शान्तिमय उपायों को व्यय करने पर भी अत्याचारों का अन्त न हो सका, तो ऐसी दशा में शेष उपायों को भी प्रयोग में लाने के लिये अपने को अधिकारी समझ लेना चाहिये। क्योंकि ऋषियों ने ऐसे समय के लिये आपद्धर्म्म का आदेश किया है। देखो मनुस्मृति—

"सहसर्वाः समुत्पन्नाः प्रसमीक्ष्यापदो भृशम्।
संयुक्तांश्च वियुक्तांश्च सर्वोपायान्सृजेद्बुधः॥"

यह सब कुछ करते हुए भी क्रोध से तो दूर ही रहना उचित है, इस-

धर्म्मस्य धृत्यादीनि दशलक्षणानि वर्णयित्वा कविस्तेषां पालनाय जनानुद्बोधयन्नाह—

विहायदार्वादिविनिर्म्मिताःस्रजो
द्रुतं समाधृत्य सुलक्षणावलीम् ।
जपन्तु एतां सततं सुबोधिनीं
महेश्वराऽनुग्रह-पात्रतामियुः ॥१५॥

सु० सं० टीका—भो मनुष्याः ! इति सम्बुद्धिपदमत्राध्याहार्य्यम् । दारु काष्ठम्, आदि येषां ते दार्वादयः । "दारु सात्पित्तले काष्ठे देवदारौ नपुंसकम्" इति त्रिकाण्डशेषः । आदिपदेनोपलरज्जुप्रभृतीनां ग्रहणम् । तैर्विनिर्म्मिताः प्रगुम्फिताः दार्वादिविनिर्म्मिता स्ता स्तथाभूताः । स्रजः मालाः "सुमिरिनी" इति साम्प्रतं लोके विख्याताः । विहाय त्यक्त्वा (प्रयोजनशून्यत्वादिति

---

लिये कि क्रोध एक प्रकार का नशा है जो मनुष्य को पागल सा बना देता है, और पागल अपने पराये का भान हो भूल जाता है, फिर वह आत्मरक्षा भी नहीं कर सकता ।

स्वनामधन्य स्वर्गीय महाराजाधिराज युधिष्ठिर तो आज तक अजातशत्रु और धर्म्मराज आदि शब्दों से सम्मानित किये जाते हैं, फिर भी वे अत्याचारी कौरवों के विरुद्ध युद्धस्थल में आ डटे और विपक्षियों का सफाया करते हुए इन्द्रप्रस्थ के सार्वभौमसिंहासनारूढ़ हुए । यदि क्रोध के वशीभूत होकर युद्ध करते, तो यह विजयश्री उनके लिये अत्यन्त दुर्लभ थी ।

भावः) द्रुतं शीघ्रम्। एतां इमाम्, मत्प्रणीतामित्यर्थः। बुध्यतेऽनेनेति बोधः, सुष्ठु बोधः सुबोधः, सुबोधोऽस्या अस्तीति सुबोधिनी, तां सुबोधिनीम्। सुलक्षणानां आवली पङ्क्तिः "वीथ्यालिरावलिः पङ्क्तिः" इत्यमरः। कुत्रचिन्ङीषन्तोपि लभ्यते। सुलक्षणावली ताम् (धर्म्मस्य धृत्यादीनि दशलक्षणान्येव मणयस्तैः प्रगुम्फितां माला मित्यर्थः) सततं निरन्तरम्। समाधृत्य सम्यक्प्रकारेण धारयित्वा। जपन्तः स्मरन्तः, (भवन्त इति शेषः)। महाँश्चासावीश्वरो महेश्वरः परमात्मा। तस्य अनुग्रहः हितार्जनाहितनिवारणौत्सुक्यम्, दयेत्यर्थः। महेश्वरानुग्रहः। तस्य। पात्रस्य योग्यस्य भावः पात्रता "पात्रं तु भाजने योग्ये" इति विश्वः। "तस्यभावस्त्वतलौ" इत्यनेन तल्। तां महेश्वरानुग्रहपात्रताम्। इयुः प्राप्नुयुः। धर्म्मलक्षणान्यनुसरत्स्वेव मानवेष्वीश्वरोऽनुग्रहं विदधातीति फलितोर्थः। यथाह मनुः—

---

क्रोध के वशीभूत होकर तो म्लेच्छदेशीय भारतप्रवासी यवन शासकों ने काम लिया था, भारतभूमि के आभूषणस्वरूप अनेक सुन्दर और सम्पन्न नगरों को ध्वस्त कर दिया, अथाह पुस्तकालयों को (जिन में आर्य्यों की करोड़ों वर्षों की सञ्चित सम्पत्ति वेदादि रत्नरूप शास्त्र भरे पड़े थे) बात की बात में जलाकर खाक कर दिया, आर्य्यों को जबरदस्ती से पकड़ पकड़ कर यवनमत में मिलाया, जो न मिले उन्हें परमधाम पहुँचाया और जो इनको अङ्गूठा बताकर जङ्गलों में भाग गये अथवा युद्धस्थल में इनके दाँत खट्टे कर दिये, उनको हिन्दू (जिसके अनार्य्य आदि कुत्सित अर्थ होते हैं। वेदादि सत्य शास्त्रों में कहीं भी हिन्दूशब्द का नाम निशान तक नहीं है।) कह कर अपने विवेकशून्य हृदय को शान्त

"दशलक्षणानि धर्म्मस्य ये विप्राः * समधीयते।
अधीत्य चानुवर्त्तन्ते ते यान्ति परमां गतिम् ॥१५॥

अ० स० टीका—दार्वादिविनिर्म्मिताः=काष्ठ आदि की बनी हुईं। स्रजः=मालाओं को। विहाय=त्याग कर। द्रुतम्=जल्दी से। एताम्=इस मेरी बनाई हुई। सुबोधिनीम्=उत्तम उपदेश दात्री। सुलक्षणावलीम्=धर्म्म के धृति आदि सुन्दर लक्षणों वाली माला को। सततम्=सदैव। समाधृत्य=धारण करके। जपन्तः=जपते हुए; मनन करते हुए। महेश्वरानुग्रहपात्रताम्=परमात्मा के अनुग्रह की पात्रता को। इयुः=प्राप्त करें ॥१५॥

---

* विप्रान्ति प्रयत्नेन पूरयितु ञ्चकोर्पन्ति दुःखभाजां मनोरथानिति विप्राः कारुणिका इत्यर्थः।

---

किया, अधिक क्या लिखूं? आर्य्यों के आनन्दाश्रम को रौद्राश्रम (श्मशानभूमि) बनादिया। हा! अभागे भारतवर्ष! उन भेड़ियों के भय से भीत होकर आज तक तू अपने को हिन्दोस्तान कबूल कर रहा है।

वे नरभेड़िये भी नेस्तनाबूद हो गये, अपने किये का फल पा गये, अब तो केवल किताबों के द्वारा उनका अपजस मात्र दृष्टिगोचर हो रहा है।

हाँ; अपने जङ्गलीपन का नमूना तो अवश्य अपने अनुयायियो के लिये बतौर यादगीरी के छोड़ गये हैं, जो कभी कभी सौम्यमूर्त्ति आर्य्यों पर अतिनिर्दयता के साथ आज़माया जाता है। आर्य्य बेचारे ग़रीब गैया बनकर चुपचाप सहते जाते हैं, आपद्धर्म्मव्यवस्था को नितान्त भूल बैठे हैं। सर्वशक्तिमान परमात्मा की कृपा से यदि आर्य्यों की दृष्टि मनुस्मृति वाले "सहस्रशः" पर पड़ेगी तो हमारे इन गुण्डे यवन-मित्रों के होश हवास भी

भा० भा० टीका—हे मनुष्यों ! आप काष्ठ आदि से गुंथी हुई निरर्थक मालाओं ( इमिरिनिओं ) को छोड़, धर्म्म के धृति आदि सुन्दर लक्षणों वाली माला को धारण करके जपते हुए परमात्मा की दया के पात्र बनो। धर्म्म लक्षणों के अनुसार चलने वाले ही पर ईश्वर अनुग्रह करता है।

मनुजी कहते हैं कि—जो सज्जन धर्म्म के इन दश लक्षणों को समझ कर व्यवहार में लाते हैं वे ही परमगति ( उन्नति ) को पाते हैं ॥१५।

धर्मास्य रक्षकान्विघातकांश्च प्रति मनुवचोऽ-

वलम्ब्य कविराह—

सुरक्षणं यः सुकृतस्य साधये-
तमेव नित्यं तदपीह रक्षति।
हतं तथैव प्रतिहन्ति घातुकं
मनुस्त्विमांवाचमुवाचवास्तवीम् ॥१६॥

सु० सं० टीका—यः कश्चिन्मनुष्यः। इह अत्र भुवस्तले। नित्यं

सहज में ठिकाने आ जायँगे।" "भय बिनु होत न प्रीति"। तब ये सब एक स्वर से भारत की प्रार्थना करने लगेंगे कि—

वसु वसुन्धरायास्त्वं त्वार्य्यावर्त्त जगद्गुरो !
पूज्येते सागरैः पादौ शिरस्ते हिमवन्नगैः ॥
अतो हि पूजनीया स्यादस्माभिस्तव सन्ततिः।
उत्पातं नो करिष्यामः प्रसादं कुरु वत्सल ॥

हे समस्त संसार के गुरो ! आर्य्यों के वासस्थान आर्य्यावर्त्त ! समुद्र तो

सदैव। सुकृतस्य धर्म्मस्य "स्याद्धर्म्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" इत्यमरः। सुरक्षणं सुष्ठुतया पालनम्। साधयेत् कुर्यात्। तमेव धार्म्मिक मेवेत्यर्थः। तदपि सुकृत मपीति भावः। रक्षति पालयति पोषयतीत्यर्थः। हतं विनाशितं सुकृतम्। घातुकं हन्तारम्, येन सुकृतं विनाशितं भवेत्, तम्। तथैव तेनैव प्रकारेण, येन प्रकारेण सुकृतं विनाशितं स्यात्। प्रणिहन्ति विनाशं गमयति। मनुः धर्म्मप्रवक्ता। इमाम् एवं विधाम्। वाचं वाणीम्। तु निश्चयेन, अवधार्य्येत्यर्थः। "तु पादपूरणे भेदे समुच्चयेऽव-धारणे। पक्षान्तरे वियोगे च प्रशंसायां विनिग्रहे" इति मेदिनी। वास्तवीं यथार्थाम्। उवाच जगाद। यथा—

"धर्म्म एव हतो हन्ति धर्म्मो रक्षति रक्षितः।
तस्माद्धर्म्मो न हन्तव्यो मानो धर्म्मो हतोऽवधीत्" ॥१६॥

अ० ल० टीका—यः=जो मनुष्य। इह=इस पृथ्वी पर। नित्यम्=हमेशा, सदा। सुकृतस्य=धर्म्म का। सुरक्षणम्=अच्छी तरह पालन। साधयेत्=करता है। तमेव=उसी पुरुष को। तदपि=वह धर्म्म भी। रक्षति=बचाता है, और। हतम्=

---

तेरे चरणों को पूज रहे है और हिम से आच्छादित बड़े २ पर्वत तेरे मस्तक की शोभा बढ़ा रहे हैं, इसलिये कि तू पृथिवी का एक मात्र रत्न है।

अतः अब तेरी सन्तान अर्थात् आर्य्यों को हम पूजते है, सम्मानित करते हैं। अब कभी उत्पात अर्थात् आर्य्यों के साथ लड़ाइ झगड़ा नहीं करेंगे। हे कृपालो! आर्य्यावर्त्त! हम पर मेहर्बानी कर, हमें सुख से रहने दे। तथास्तु॥

नाश किया हुआ धर्म्म। घातुकम्=नाश करने वाले को। तथैव=वैसे ही, जैसे उसने धर्म्म को नाश किया। प्रणिहन्ति=नाश कर देता है। मनुः=धर्म्मव्यवस्थापक मनुजी ने। तु=तो। इमाम्=यह। वाचम्=वाणी। वास्तवीम्=यथार्थ। उवाच=कही है ॥१६॥

भा० भा० टीका—जो मनुष्य धर्म्म की रक्षा करता है, उसके अनुसार चलता है, धर्म्म भी उस मनुष्य की रक्षा करता है। और जो मनुष्य धर्म्म को नाश करता है, छोड़ देता है,अर्थात् धर्म्म के विपरीत चलता है, उस घाती नराधम को धर्म्म भी नाश कर देता है, धूल में मिला देता है। यह वचन मनुजी ने अक्षरशः सत्य कहे हैं ॥१६॥

धर्म्माचरणं विना नराणां का दशा बोभवतीति
वर्णयन्नाह कविः—

विशुद्धधर्म्माचरणं विना जना-
हिताहितज्ञानविशून्यवृत्तयः।
प्रणिन्दितं विद्वद्युपदिष्टवेदतो
विरुद्धभावाचरणाश्चरन्त्यघाः ॥१७॥

सु० सं० टीका—विशुद्धं पवित्रञ्च (यद्) धर्म्मस्याऽऽचरणं सेवनं तद्विशुद्धधर्म्माचरणम्। विना अन्तरेण "पृथग्विनान्तरेणर्त्ते हिरुङ्नाना च वर्जने" इत्यमरः। वर्जयित्वेत्यर्थः। हितञ्चाहितञ्च हिताहिते-अभीप्सितानभीप्सित इत्यर्थः, तयोः (यद्) ज्ञानं विवेचनात्मिकाबुद्धि स्तद्धिताहितज्ञानम्, तस्मिन्विशून्या

विनष्टभावा वृत्ति र्येषां ते हिताहितज्ञानविशून्यवृत्तयः कृत्याकृत्य-विचारमूढाः। अघं पापं येषामस्तीति "अर्श आदिभ्योऽच्" अघाः पापात्मानः। जनाः मनुष्याः। विधिना परमेश्वरेण उप-दिष्टः प्रबोधितो विधभ्युपदिष्टः। विदन्ति जानन्ति (विद ज्ञाने आदादिकः) सर्वा विद्या येन वा—विद्यन्ते भवन्ति (विद सत्तायां दैवादिकः) सर्वा विद्या यस्मिन्वा—विन्दन्ति विन्दन्ते लभन्ते (विद्लृ लाभे तौदादिकः) सर्वा विद्या यत्र वा—विन्दते विचार-यन्ति (विद विचारणे रौधादिकः) सर्वा विद्या येनासौ वेदः श्रुतिः सर्वासां विद्यानां प्राकट्यस्थान मित्यर्थः (एभ्यश्चतुर्भ्यो-धातुभ्यः "हलश्च" इत्यनेन घञि कृते सत्येतद्रूपम्) स ऋग्यजुः-सामाथर्वण श्चेति चतुर्धा भिद्यते, "ऋग्वेदो यजुर्वेदः सामवेदोऽ-थर्ववेदः" इति मुण्डकोपनिषत्। विधभ्युपदिष्टश्चासौ वेदः विधभ्यु पदिष्टवेदस्तस्मात् "पञ्चम्यास्तसिल्" विधभ्युपदिष्टवेदतः। विरुद्ध-श्चासौ भावः विरुद्धभावस्तस्याचरणं व्यवहारः विरुद्धभावाचरणम् (यत्) प्रकर्षेण निन्दितं प्रणिन्दितम् विगर्हितमित्यर्थः। चरन्ति व्यवहरन्ति ॥१७॥

अ० स० टीका—विशुद्धधर्म्माचरणम्=पवित्र वैदिक धर्म्म के व्यवहार के। विना=अतिरिक्त। हिताहितज्ञानविशून्यवृत्तयः =भलाई व बुराई की जानकारी से रहित बुद्धि वाले। अघाः= पापी। जनाः=मनुष्य। विधभ्युपदिष्टवेदतः=परमात्मा के उपदेश स्वरूप वेद से। विरुद्धभावाचरणम्=विरुद्ध भावमय आच-रण को। प्रणिन्दितम्=जो अत्यन्त ग्लानि युक्त है,

( उसको ) । चरन्ति=आचरते हैं, व्यवहार में लाते हैं॥ १७॥

भा० भा० टीका—पवित्र सनातन वैदिक धर्म्म के पालन विना हिताहितज्ञान से हीन जीवन वाले पापी मनुष्य, ईश्वरीय आदेश वेद ( जिस में समस्त विद्याएँ वर्त्तमान हैं, उस ) से विरुद्ध अतएव सब प्रकार से गर्हित अवैदिक व्यवहारों का आश्रय लेते हैं ॥१७॥

अथान्धपरम्पराप्रियमनुष्याणामन्तिमाकृतिं
निदर्शयन्नाह कवि :—

सुकर्म्मदुष्कर्म्मविचारवाहिनीं
धियं तिरस्कृत्य जडाश्च धूर्त्तताम् ।
समालभन्तोन्धपरम्पराप्रियाः
पतन्ति दुःखेष्वघकर्म्मभिः स्वकैः ॥१८॥

सु० सं० टीका—सुष्टु कर्म्माणि सुकर्म्माणि, दुष्टु कर्म्माणि दुष्कर्म्माणि, एतेषामितरेतरयोगः—सुकर्म्मदुष्कर्म्माणि, तेषां विचारो विवेकः सुकर्म्मदुष्कर्म्मविचारः "इदं कर्त्तव्यमिदमकर्त्तव्यमिति निर्णयात्मिका शक्तिः" तं वाहयति प्रापयतीति सुकर्म्मदुष्कर्म्मविचारवाहिनी तां तथोक्ताम्। धियं बुद्धिम्। तिरस्कृत्य अनादृत्य त्यक्त्वेत्यर्थः। च पुनः। धूर्त्ततां वञ्चकताम्। समालभन्तः सम्यक्प्रकारेण प्राप्नुवन्तः। जडाः मूर्खाः। अन्धानां ज्ञानचक्षुर्विहीनानां परम्परा अन्धपरम्परा, बहुकालात्कुटुम्बप्रविष्टकुत्सितप्रणाली, सैव प्रिया मनोरमा चित्तापकर्षिणीत्यर्थः, येषां ते-अन्धपर-

त्पराश्रयाः मनुष्याः। स्वकैः निजैः। अघैः पापैः पूर्णानि च तानि कर्म्माणि अघकर्म्माणि तैरघकर्मभिः। दुःखेषु आपत्सु पतन्ति।

प्रसङ्गवशादत्र ब्राह्मणादिवर्णचतुष्टयस्य लक्षणानि शास्त्रेभ्यः समुद्धृत्य क्रमेणोच्यन्ते यज्ज्ञात्वा ते यथायथमनुवर्त्तेरन्। यथा—

"अध्यापनमध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहञ्चैव ब्राह्मणानामकल्पयत् ॥ मनुः ॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।
ज्ञानंविज्ञानमास्तिक्यंब्राह्मकर्म्मस्वभावजम् ॥ गीता ॥
प्रजानां रक्षणं दानमिज्याध्ययनमेव च।
विषयेष्वप्रसक्तिश्च क्षत्रियस्य समासतः ॥ मनुः ॥
शौर्य्यं तेजोधृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्।
दानमीश्वरभावश्च क्षात्रं कर्म्म स्वभावजम् ॥ गीता ॥
पशूनां रक्षणं दानमिज्याध्ययनमेव च।
वणिक्पथं कुसीदञ्च वैश्यस्य कृषिमेव च ॥ मनुः ॥
एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत्।
एतेषामेव वर्णानां शुश्रूषामनसूयया ॥ मनुः ॥"

इत्यादिभिः प्रमाणैस्तु गुणकर्म्मस्वभावेनैव वर्णव्यवस्थोपलब्धिः। नतु जन्मतः। जन्मतस्तु सर्वेऽपि शूद्रा एव जायन्ते। "जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते" इति। संस्कारो गुणकर्म्मस्वभावानां संशुद्धिः। स्वस्य भावः स्वभावः, स त्वान्तरिकस्थूलसूक्ष्मविचारः। एतेषां गुणकर्म्मस्वभावानां परिवर्त्तनादेव

भवोद्भवा उत्तमवर्णत्वं हीनवर्णत्वञ्चापद्यन्ते। अत्रापस्तम्बसूत्रम्—

"धर्म्मचर्य्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ। अधर्म्मचर्य्यया पूर्वो वर्णो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ॥" इति॥ मनुनापि स्पष्ट मेवोक्तम्—

"शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्।
क्षत्रियाज्जातमेवन्तु विद्याद्वैश्यात्तथैव च॥"

अतः सर्वैः सदयहृदयै र्गुणकर्म्मस्वभावानुसारिण्येव वर्णव्यवस्था मन्तव्येति।

यच्च केनापि "स्त्रीशूद्रौ नाधीयातामिति श्रुतेः" इति प्रजल्पितम्, तदपि प्रामादिकमेव। अप्रामाणिकत्वात्, चतसृषु श्रुतिषु काप्येतादृग्वचो न लभ्यते। पुनरनेन नियमेन तु केनापि पठितुं न शक्यते। कथम्? जन्मतस्तु सर्वेऽपि शूद्रा इति। ईश्वरस्तु वेदे सर्वेभ्यः स्त्रीपुरुषेभ्यः पठनपाठनस्यानुमतिं प्रददाति। यथा—

"यथेमां वाचं कल्याणीमावदानि जनेभ्यः। ब्रह्मराजन्याभ्याᳪशूद्राय चार्य्याय * च स्वाय चारणाय †॥" इति यजुः॥

---

* अर्य्याय वैश्याय। यथार्य्यमुनिः—

"अर्य्यः स्यादीश्वरे वेदे लोके तु स्वामिवैश्ययोः।
वर्य्यादिवर्याने वेदे वैश्यादौ च निगद्यते॥"

† अरणाय अतिशूद्राय, चाण्डालायेत्यर्थः—

"क्रूरो लुब्धः प्रहर्त्ता च परद्रव्यापहारकः।
निर्दयो सर्वभूतेषु चाण्डालश्च स उच्यते॥"

अतएव यत्कर्त्तव्यं तद्वेदादिशास्त्रतो विचार्य्यैव कुर्वन्तु, यदकर्त्तव्यं तस्माद्विरमन्तु सुकृतिन इति भावः ॥१८॥

अ० स० टीका— सुकर्म्मदुष्कर्म्म विचारवाहिनीम् =भले व बुरे कर्म्मों के निर्णय को प्राप्त कराने वाली। धियम्= बुद्धि को। तिरस्कृत्य=अनादर करके, छोड़ कर के। धूर्त्तताम्= वञ्चकता (ठगपन) को। समालभन्तः=प्राप्त होते हुए, धारण करते हुए। अन्धपरम्पराप्रियाः=बहुत समय से कुटुम्ब में फैली हुई बुरी चाल को मानने वाले, लकीर के फकीर। जडाः=मूर्ख लोग। स्वकैः=खुद के किये हुये। अघकर्म्मभिः=पाप कर्म्मों के द्वारा। दुःखेषु=दुःखों में। पतन्ति=गिरते हैं ॥१८॥

भा० भा० टीका—भले व बुरे कर्म्मों के निर्णय को प्राप्त कराने वाली बुद्धि को तिलाञ्जलि देकर धूर्त्तता को धारण करते हुए अन्धाधुन्ध रीति रिवाज को माननेवाले लकीर के फकीर मूर्ख लोग अपने किये हुए पाप कर्म्मों के द्वारा दुःखसागर में गोते खाते रहते हैं।

यहाँ प्रसङ्गवश ब्राह्मणादि चारों वर्णों के विषय में अनुक्रम से वेदादि शास्त्रों के अनुसार कुछ लिखता हूँ, जिससे वर्णाश्रमियों को अपने अपने कर्त्तव्यों का कुछ भान हो जाय—

१। ब्राह्मणों के लक्षण—अध्ययन=वेदादि शास्त्रों को पढ़ना। अध्यापन=दूसरों को भी पढ़ाना। यजन=यज्ञ करना। याजन=दूसरों से भी यज्ञ करवाना। दान=देश काल व पात्र का विचार कर के योग्य व्यक्ति को (उससे प्रत्युपकार की आशा त्याग कर) सहायता देना। प्रतिग्रह=यदि खुद के लिये आपत्काल उपस्थित होगया हो, अथवा धर्म्म प्रचार के लिये धन की आवश्यकता हो तो दूसरों से सहायता लेना।

शम=अपनी इच्छाओं को निन्दनीय विषयों से हटाकर धार्म्मिक विषयों में नियुक्त करना। दम=सातवें श्लोक में देखो। क्षान्ति=क्षमा, छठे श्लोक में और नौवें श्लोक की टीका में देखो। आर्जव=सबके साथ सरलता का वर्ताव रखना। तप=जितेन्द्रिय होकर उत्तम साधनों के द्वारा धर्म्मानुष्ठान की सिद्धि में लग जाना। शौच=पवित्रता, नौवें श्लोक में देखो। ज्ञान=वेदादि सत्य शास्त्रों को पढ़ कर सत्यासत्य के निर्णय करने की योग्यता प्राप्त करना, जो वस्तु जैसी हो, उसे वैसी ही मानना और वैसाही दूसरों को भी समझाना अर्थात् जड़ को जड़ और चेतन को चेतन, विपरीत कल्पना नहीं करना। विज्ञान=पृथिवी से लेकर ईश्वर पर्य्यन्त जितने पदार्थ हैं उन्हें विशेष रूप से जान लेना। आस्तिक्य=आस्तिक भाव अर्थात् वेद, ईश्वर, मुक्ति, पूर्वजन्म, परजन्म, धर्म्म, विद्या, सत्सङ्ग तथा माता, पिता, आचार्य्य और अतिथियों की सेवा करना, इनमें श्रद्धा रखना, इनकी कभी निन्दा नहीं करना। ये ब्राह्मणों के गुण कर्म्म हैं।

२। क्षत्रियों के लक्षण—अत्याचारी लोगों के हाथ से प्रजा के जान व माल को बचाना। दान देना। यज्ञ करना। वेदादि शास्त्रों को पढ़ना। बुरे विषयों में नहीं फँसना अर्थात् जितेन्द्रिय रह कर शरीर को बलवान रखना, जिससे विदेशियों के हमलों से देश को और विधर्म्मियों के हमलों से धर्म्मात्माओं की रक्षा हो सके। बहादुर होना। युद्ध में भय भीत न होना। तेजस्वी होना। दीनता से दूर रहना। सङ्कट मे धीरज रखना। शास्त्रानुसार राजा और प्रजा सम्बन्धी व्यवहारों में कुशल होना। युद्ध मे दृढ़ होकर शत्रुओं से मोर्चा लेना, डर कर भग नहीं जाना, डर कर भगे हुए भगौड़े क्षत्रिय को कभी भी स्वर्ग नहीं मिलता है, स्वर्ग के उम्मीदवार क्षत्रियो की युद्धस्थल मे ही परीक्षा होती है ; जो उत्तीर्ण होता है, वही क्षत्रियवीर स्वर्गप्राप्ति का अधिकारी समझा जाता है, यह युद्धस्थल सब के हाथ नही आता, किन्तु जिसके

पूर्वकृत पुण्य उदय होते हैँ वही यह अलभ्य लाभ ले सकता है। ईश्वर पर विश्वास रखना। यह क्षत्रियोँ के गुण कर्म्म हैँ।

३। वैश्योँ के लक्षण—गाय भैँस आदि उपयुक्त पशुओँ का पालन करना। दान देना। यज्ञ करना। वेदादि शास्त्रोँ को पढ़ना। ईश्वर मेँ भक्ति रखना। सब प्रकार के व्यापार करना, किन्तु ऐसा व्यापार नहीँ करना जिससे स्वदेश दरिद्र होजाय। ब्याज पर रुपयोँ का लेन देन करना, किन्तु "आओ हमारी हाट मेँ हम देँ तुम्हारी टाट मेँ" ऐसा नहीँ करना। और खेती करके अन्नादिक उपजाना। यह वैश्योँ के गुण कर्म्म हैँ।

४। शूद्रोँ के लक्षण—ईर्षा, निन्दा, अभिमान आदि दोषोँ से रहित हो कर ब्राह्मणादि वर्णत्रय की प्रेम पूर्वक सेवा करना। यही एक मात्र शूद्रोँ का गुण-कर्म्म है। होसके तो अपनी उन्नति के उपाय भी सोचते रहना चाहिये। वे उन्नति के उपाय ब्राह्मणादि वर्णत्रय की सङ्गति से ही प्राप्त हो सकते हैँ।

इत्यादि प्रमाणोँ से तो गुण कर्म्म स्वभाव के अनुसार ही वर्णव्यवस्था सिद्ध हुई, न कि जन्म से। जन्म से तो सब कोई शूद्र ही होते हैँ फिर संस्कारोँ से संस्कृत (शुद्ध) हो कर द्विज अर्थात् ब्राह्मणादि वर्णत्रय मेँ गिने जाते हैँ। गुणकर्म्मस्वभाव का संशोधन ही संस्कार, और स्वभाव कहते हैँ—आन्तरिक स्थूल व सूक्ष्म विचारोँ को। गुणकर्म्म स्वभाव के परिवर्त्तन से ही मनुष्य उत्तमवर्ण अथवा नीच वर्ण को पाते हैँ। प्रमाण के लिये यहां आपस्तम्ब सूत्र को देखिये कि जिसमे "धार्म्मिक व्यवहारोँ के पालन करने से नीच जाति मेँ जन्मा हुआ मनुष्य यथाक्रम अपने से उत्तम २ वर्ण अर्थात् वैश्य, क्षत्रिय और ब्राह्मण वर्ण (जाति) तक को प्राप्त होता है, अर्थात् उस मेँ मिलजाता है। और उत्तम वर्ण अर्थात् ब्राह्मण जाति मेँ जन्मा हुआ मनुष्य भी अधर्म्माचरण से यथाक्रम अपने से नीचे २ वाली क्षत्रिय, वैश्य और

शूद्र जाति तक को प्राप्त होता है. अर्थात् उसमें मिल जाता है।" ( ऐसा ) लिखा है।

मनुजी ने भी यही कहा है कि—शूद्र उत्तम गुणकर्म्मस्वभाव के होने से ब्राह्मण हो सकता है और ब्राह्मण अधम गुणकर्म्मस्वभाव के होने से शूद्र हो सकता है, इसी प्रकार क्षत्रिय भी ऊँचा नीचा हो सकता है और वैश्य भी।

इसलिये सर्व मनुष्यों को गुणकर्म्मस्वभावानुसार ही वर्ण व्यवस्था माननी चाहिये। और जो किसी ने यह कहा है कि "स्त्री और शूद्र न पढ़, यह वेद का वचन है" यह उसका प्रमाद मात्र है, क्यों कि चारों वेदों मे यह वाक्य कहीं नहीं मिलता। और इस नियम से तो फिर कोई पढ़ भी नहीं सकता ; क्यों कि जन्म से तो सभी शूद्र साबित हो चुके हैं। ईश्वर तो वेद में सब स्त्री पुरुषों को पठन पाठन की आज्ञा देता है कि—

हे मनुष्यो! जिस प्रकार मै सब स्त्री पुरुषों के लिये इस कल्याण कारिणी ऋग्वेदादि चारों वेदों की वाणी का उपदेश करता हूँ, वैसे ही तुम भी किया करो। क्यों कि यह वेद वाक्य "ब्राह्मण, क्षत्रिय, वैश्य, शूद्र और अति शूद्र अर्थात चाण्डाल * तक के लिये है।

इसलिये जो कार्य्य करने योग्य हो उसे वेदादि सत्य शास्त्रों की सम्मति से विचार कर करना चाहिये, और जो कार्य्य करने योग्य न हो, निन्दित हो तो उसे नहीं करना चाहिये ॥ १८ ॥

अन्धपरम्पराप्रियमानवानां गतिं दर्शयित्वा कविः

परमात्मसामान्यस्वरूपं निरूपयन्नाह—

* चाण्डाल उसे कहते हैं—जो दूसरों को कत्ल करने वाला हो, लोभी हो, मारपीट करने वाला हो. दूसरों का धन चुराने वाला हो, अर्थात् जो प्राणी मात्र के लिये निर्दयी हो।

उपासनीयो मनुजैर्य ईश्वरः
स एक एवास्तिनिराकृतिःस्वयम् ।
सृजत्यवत्यन्तयतीदमद्भुतं
जगज्जगन्नाथ इति श्रुतेर्वचः ॥१६॥

सु० सं० टीका—मनुजैः मनुष्यैः, ब्राह्मणादिवर्णचतुष्टयोद्भवै-रन्यैश्चान्त्यजैरपीत्यर्थः । यः कश्चिदपि । उपासनीयः सेवनीयः । अस्ति विद्यते ( चेत्तर्हि ) एकः अद्वितीयः । ईश्वरः परमात्मा । एव हि (नत्वन्यः) । सः असौ । स्वयम् आत्मना । निराकृतिः निराकारः (निर्गतः सततमाकृतिभ्यो रूपविशेषेभ्य-इति निराकृतिः "आकृतिः कायरूपयोः" इति शाश्वतः । तथापि जगतां लोकानां स्थावरजङ्गमानामित्यर्थः । नाथः अधिपति-र्जगन्नाथः (अस्ति, अपिच स एव ) इदं एतद्-रूपरसगन्धस्पर्श-शब्दात्मकम् । अद्भुतं विचित्रं, विस्मयोत्पादकमित्यर्थः । जगत् संसारम् । सृजति उत्पादयति, कारणरूपात्कार्य्यरूपं नयती-त्यर्थः । अवति उत्पादितं विश्वञ्चैकसहस्रचतुर्युगपर्य्यन्तं रक्षति । अन्तयति प्रलयङ्करोति ( अन्तो नाशस्तं करोतीति "तत्करोतितदाचष्टे" इति गणसूत्रान्-णिच् "अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः" इति हेमचन्द्रः ) कार्य्यरूपात्पुनः-कारणरूपं प्रापयतीत्यर्थः । इति एतत्प्रकारकम् । श्रुतेः वेदस्य । श्रूयन्ते सृष्टिमारभ्याद्यपर्य्यन्तं सर्वाविद्याऽनयेति श्रुतिस्तस्याः

(श्रु श्रवणे इत्यस्माद्भौवादिकाद्धातोः "स्त्रियां क्तिन्" इति क्तिन् प्रत्ययः) वचो वचनम्, उपदेश इत्यर्थः। (अस्ति) यथा—

"हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥"
इति यजुः॥

"न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः॥" इति यजुः॥
इत्यादीनि बहूनि प्रमाणानि चतुर्ष्वपि वेदेषूपलभ्यन्ते॥१६॥

भ० स० टीका—मनुजैः=मनुष्यों के द्वारा (लिये)। यः=जो-कुछ। उपासनीयः=उपासना करने योग्य। अस्ति=है, तो। एकः=एक मात्र। ईश्वरः=परमात्मा। एव=ही है। सः=वह, परमात्मा। स्वयम्=खुद। निराकृतिः=निराकार है (और)। जगन्नाथः=सम्पूर्ण संसार का अधिपति है (और वह)। इदम्=इस। अद्भुतम्=विचित्र। जगत्=सम्पूर्ण कार्य्य जगत् को। सृजति=पैदा करता है। अवति=उत्पन्न किये हुए जगत् की रक्षा करता है। अन्तयति=फिर उसका नाश अर्थात् प्रलय कर देता है। इति=ऐसा। श्रुतेः=वेद का। वचः=वचन अर्थात् उपदेश है॥१३॥

भा० भा० टीका—प्रत्येक मनुष्य अर्थात् ब्राह्मण से लेकर अन्त्यज पर्य्यन्त के लिये उपासना करने के योग्य एक परमात्मा ही है, और वह स्वयं निराकार तथा सम्पूर्ण संसार का स्वामी है। वह इस विचित्र जगत् को उत्पन्न करता है, नियत अवधि (एक हजार चतुर्युगी) तक * इसे स्थिर रखता

* जगत् की सृष्टि स्थिति और प्रलय का पृष्ठ ६ से १२ तक की टिप्पणी में देखिये।

है और फिर इसका नाश कर देता है। यही वचन वेदों में मिलते हैं कि—"जो स्वयं प्रकाशमान है और जिसने सूर्य्य चन्द्रादिक प्रकाशयुक्त पदार्थों को धारण किया है, वह सम्पूर्ण जगत् का एक मात्र स्वामी है, इस कार्य्य-जगत् के उत्पन्न होने के पहले भी वर्त्तमान था और अब भी इस पृथिवी और सूर्य्यादि लोकों का धारण कर रहा है। हम लोग उस सुखस्वरूप अर्थात् सबको सुख देनेवाले परम पिता परमात्मा की उत्तम उत्तम साधनों के द्वारा भक्ति किया करें ॥१९॥

ईश्वरस्य सामान्यस्वरूपं निरूपयित्वा कविस्तद्विरुद्धो-
पासानां निन्दयन्नाह—

तथापि सन्त्यज्य विरुद्धबुद्धय-
स्तमव्ययं विश्वनिमित्तकारणम्।
भजन्ति नानाविधदेवकाकृतिं
व्यथात्रयस्योद्भवहेतुसङ्गताम् ॥२०॥

सु० सं० टीका—तथापि सकललोकनायकस्याजरामर-निर्भयस्य निरवयवस्य परमात्मनो विद्यमानतायां सत्यामपि विरुद्धा परमात्मनिर्म्मलोपासनातः प्रतिकूला बुद्धिर्येषां ते विरुद्धबुद्धयः विपरीतमतयो मनुष्याः। तं पूर्व्वोक्तप्रकारकमित्यर्थः। न व्येति न नश्यतीति ( विपूर्व्वकाद् इण गतावित्यस्मादादादिकाद्धातोः "एरच्" इत्यनेन सूत्रेण "अच्" प्रत्ययः ) अव्ययस्तमव्ययम्, अविनाशिनमित्यर्थः। विश्वस्य सम्पूर्णकार्य्यजगतो निमित्तकारणं विश्वनिमित्तकारणम्। प्रत्येकं कार्य्यं प्रति प्रधानतस्त्रीणि कारणानि भवन्ति।

निमित्तकारणम्, उपादानकारणम्, सामान्यकारणञ्चेति। कार्य्यस्य कर्त्तारं निमित्तकारणं वदन्ति। यथा—घटः कार्य्यम्, तन्निर्म्माता कुलाल एव तं प्रति निमित्तकारणम्। यं कमपि पदार्थमादाय तस्य रूपान्तरं विधीयते तमुपादानकारणं वदन्ति। यथा घटं प्रति मृत्तिकोपादानकारणम्। मृत्तिकोपादानादेव घटो भवितुमर्हतीति। उपादानाद्भिन्नस्य यस्य कस्यापि पदार्थस्य साहाय्येन कर्त्रा कार्य्यं क्रियते, तं साहाय्यकं पदार्थं सामान्यकारणं वदन्ति। यथा दण्डभ्रम्यादयो घटं प्रति सामान्यकारणम्। तथैवात्र परमाणुरूपा प्रकृतिरेवोपादान-कारणं विश्वं प्रति। विश्वं तु कार्य्यम्, रूपरसगन्धस्पर्श-शब्दात्मकम्। दिगाकाशकालाश्च सामान्यकारणत्वमगुः। ईश्वरश्च निमित्तकारणता मुपागात् "द्यावाभूमीञ्जनयन्देव एकः" इति श्रुतेः। तथाभूतं परमात्मानम्। सन्त्यज्य विहाय। व्यथाः व्याधयो दुखानीत्यर्थः। त्रिविधानि दुःखानि भवन्ति। दुखानां त्रैविध्यं साङ्ख्यदर्शनेपि प्रतिपादितम्, यथा "अथ त्रिविध-दुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" इति। आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकञ्चेति। तत्राध्यात्मिकं ताव-ज्ज्वरादयः शारीरिकमानसिकसन्तापाः। आधिभौतिकं तावद् व्याघ्रतस्करादिभ्यः समुत्पन्नं दुःखम्। आधिदैविकं तु तावदतिवृष्ट्यनावृष्ट्यग्न्यनिलभूचालप्रभृतीभ्यः समुत्पन्नं दुःखम्। त्रयोऽवयवा यस्येति त्रयम्। व्यथानां त्रयं व्यथात्रयम्, तस्य व्यथात्रयस्य। उद्भवः प्रादुर्भावः, उत्पत्ति-

रित्यर्थः। हेतुर्बीजम्। "हेतुर्ना कारणं बीजम्" इत्यमरः। उद्भवस्य हेतुरुद्भवहेतुस्तं सङ्गता प्राप्ता उद्भवहेतुसङ्गता तां तथोक्ताम्। नानाविधाः अनेकप्रकारकाश्च ते देवकाः नानाविधदेवकाः ( देवशब्दात् "कुत्सिते" इत्यनेन सूत्रेण "अकच्" प्रत्ययः ) कुत्सिताः वेदादिसत्यशास्त्रेष्वप्रसिद्धा देवा इत्यर्थः। तेषामाकृतिः स्वरूपम्, प्रतिमेत्यर्थः। नानाविधदेवकाकृतिस्तां नानाविधदेवकाकृतिम्। भजन्ति सेवन्ते। यथा "रात्रिजागरणम्, दिवाशयनम्, मद्यमांसादिभक्षणम्, असामयिकोऽनाहारेणकालक्षेपः, मिथ्याऽहङ्कारः" इत्यादीनि हेयकर्म्माणीश्वरविमुखा एव कृत्वाऽधोगतिं प्राप्नुवन्तीति फलितोऽर्थः।

यथा यजुः—

"अन्धन्तमः प्रविशन्ति येऽसम्भूतिमुपासते। ततो भूय इव ते तमो य उ सम्भूत्याᳫं रताः" इति॥ २०॥

अ० स० टीका—तथापि=तो भी। विरुद्धबुद्धयः=विपरीत मति वाले मनुष्य। तम्=उस (पूर्वश्लोक में वर्णित)। अव्ययम्=अविनाशी। विश्वनिमित्तकारणम्=कार्य्यरूपजगत् के उत्पादक परमात्मा को। सन्त्यज्य=छोड़ कर। व्यथात्रयस्य=तीन तापों की। उद्भवहेतुसङ्गताम्=उत्पत्ति के मूल कारण को प्राप्त हुई। नानाविधदेवकाकृतिम्=अनेक प्रकार के कुत्सित देवताओं की आकृतियों को। भजन्ति=पूजते रहते हैं॥ २०॥

भा० भा० टीका—इस प्रकार सर्वोपास्य परमात्मा के होते हुए

भी उलटी समझ वाले मनुष्य उस अविनाशी एवं जगत् के निमित्तकारण (कर्त्ता) परमात्मा को छोड़ कर तीन तापों (दुःखों) को प्राप्त कराने वाले अनेक प्रकार के कुत्सित अर्थात् वेदादि शास्त्रों के विरुद्ध मनमाने देवताओं की आकृतियों को पूजते फिरते हैं।

प्रत्येक कार्य्य के लिये उसके आदि में मुख्य तीन कारण होते हैं, अर्थात् एक निमित्तकारण, दूसरा उपादानकारण और तीसरा सामान्य-कारण।

१ निमित्तकारण—कार्य्य के करनेवाले को निमित्तकारण कहते हैं, जैसे घड़ा कार्य्य है और उसका बनाने वाला कुम्भकार उसके प्रति निमित्तकारण हुआ।

२ उपादानकारण—जिस किसी पदार्थ को ग्रहण कर के उसका रूपान्तर (कार्य्य) किया जाय, उस ग्रहीत अर्थात रूपान्तर के पूर्वावस्थ पदार्थ को उस रूपान्तर (अर्थात् तज्जन्य कार्य्य) के प्रति उपादानकारण कहते हैं, जैसे घड़े का उपादानकारण मिट्टी है।

३ सामान्यकारण—उपादान कारण से भिन्न जिस किसी पदार्थ की सहायता लेकर कर्त्ता कार्य्य को करे, उस सहायक पदार्थ को उस कार्य्य का सामान्यकारण कहते है, जैसे घड़े के प्रति कुम्भकार का डण्डा और भ्रमि (चक्र) आदि सामान्यकारण हैं।

इसी प्रकार परमाणुरूपा प्रकृति इस जगत् का उपादानकारण, सम्पूर्ण जगत् कार्य्य, दिशा आकाश और काल सामान्यकारण और परमात्मा निमित्तकारण है। वेदों में भी लिखा है कि—इस सम्पूर्ण कार्य्य जगत् को उस एक परमात्मा ने उत्पन्न किया है।

दुःख तीन प्रकार के होते हैं, अर्थात् आध्यात्मिक, आधिभौतिक और आधिदैविक।

१ आध्यात्मिकदुःख—शरीर सम्बन्धी व्याधियों को आध्यात्मिक-दुःख कहते हैं, जैसे ज्वर, फोड़ा, फुन्सी आदि।

२ आधिभौतिकदुःख—व्याघ्र चौर आदि दुष्ट प्राणियों से उत्पन्न दुःख को आधिभौतिक दुःख कहते हैं।

३ आधिदैविकदुःख—अतिवृष्टि, अनावृष्टि, अग्नि, आंधी और भूकम्प आदि से उत्पन्न विपत्तियों को आधिदैविक दुःख कहते हैं।

ये सब दुःख ईश्वर से भिन्न भौतिक पदार्थों की उपासना करने वाले लोगों को भोगने पड़ते हैं। यजुर्वेद अध्याय ४० के ९ वें मन्त्र का भी यही आशय है कि—जो मनुष्य ईश्वर को न मान कर उससे भिन्न असम्भूति अर्थात् अनुत्पन्न अनादि प्रकृति की उपासना करते हैं, वे अज्ञानी होकर दुःख सागर में गोते खाते हैं। और जो ईश्वर का बहाना करके प्रकृतिजन्य पदार्थों की (जो स्वयं नाशवान् हैं) उपासना करते हैं, वे तो महामूर्ख होकर चिरकाल पर्य्यन्त घोर नरक (महादुःखसागर) में पड़े पड़े सड़ा करते हैं ॥ २० ॥

परमात्मविरुद्धोपासनामाक्रोश्य कविः साम्प्रतं
कुत्सितदेवालयान्निराकुर्वन्नाह—

यजन्ति केचित्परमांसभक्षिणः
पशुप्रणाशेन भृशं तदालये।
वहन्ति नद्यो रुधिरस्य यत्र वै
किमात्मतत्त्वंप्रविशन्ति केपि हा ॥२१॥

सु० सुं० टीका—तेषां कुत्सितदेवानामालयो मन्दिरं

तदालयस्तस्मिँस्तदालये। परस्य मांसं परमांसम् तद्भक्षणं-शीलं येषां ते परमांसभक्षिणः "सुप्यजातौणिनिस्ताच्छील्ये" इति णिनिः। केचित् कतिपयाः। भृशं भूयोभूयः। पशूनां प्रणाशो-विनाशः पशुप्रणाशस्तेन पशुप्रणाशेन (तान् कुदेवान्) यजन्ति। वै पादपूरणार्थकमव्ययम्। यत्र यस्मिँस्थाने। रुधिरस्य शोणितस्य। नद्यः सरितः। वहन्ति। तत्र केऽपि जनाः। आत्मतत्त्वं ब्रह्मज्ञानम्। प्रविशन्ति प्राप्तुं शक्नुवन्ति। किम्? अर्थात्—नावगन्तुं शक्नुवन्तीत्यर्थः। हा, हा कष्टम्!

अनेन "देवालयनिर्म्माणस्य प्रयोजनं यदि किमपि भवेत्तर्ह्या-त्मतत्त्वचिन्तनमेव नत्वन्यत्" इति सूचितम्॥ २२॥

अ० स० टीका—तदालये=उन कुत्सित देवताओं के मन्दिर में। परमांसभक्षिणः=दूसरों के मांस को खाने वाले अर्थात् अपने पेट को कबर बनाने वाले। केचित्=कुछ लोग तो। भृशम्=वारंवार। पशुप्रणाशेन=पशुवध के द्वारा (उनको) यजन्ति=पूजते हैं। यत्र=जिस स्थान में। रुधि-रस्य=खून की। नद्यः=नदियाँ। वहन्ति=बहती हैं (वहाँ)। के=कोई। अपि=भी। आत्मतत्त्वम्=ब्रह्मज्ञान को। प्रवि-शन्ति=पा सकते हैं। किम्=क्या?। हा=बड़े दुःख की बात है॥ २१॥

भा० भा० टीका—दूसरों का मांस भक्षण करने वाले कुछ मनुष्य तो उन कुत्सित देवताओं के मन्दिरों में हरवक्त पशुवध के द्वारा उन कुत्सित देवताओं को पूजते हैं। भला बताइये! जह खून को नदियाँ बहती हों, वहाँ कोई भी मनुष्य ब्रह्मज्ञान को पा सकता है क्या? हा कष्टम्! कोई

नही पा सकता। देवालय बनानेका यदि कुछ भी प्रयोजन हो तो वह ब्रह्म-तत्व का चिन्तन ही हो सकता है, अन्य नहीं" ॥२१॥

कुत्सितदेवालयनिष्प्रयोजनं ज्ञापयित्वा कवि—
नृंत्यादिविषयासक्तपुरुषान्निन्दन्नाह-

विचित्रमेतद्धिसखीस्वभावगाः
प्रनर्त्तयन्त श्च शरीरमात्मनः।
यशो विनाशङ्गमयन्ति पैत्रिकं
धिगार्य्यधर्म्माद्विमुखाञ्जनाधमान् ॥२२॥

सु० सं०टीका—तत्र देवालय इति पूर्व्वादत्रानुवर्त्तनीयम्। एतत् इदम्। हि एव। विचित्रं आश्चर्य्यम्। किल। सखीनां नवयोषितानां स्वभावः स्वरूपं सखीस्वभावस्तं गच्छन्ति ताद्दग्वेशं विदधतीति सखीस्वभावगाः पुरुषाः। आत्मनः स्वस्य। शरीरं गात्रम्। प्रनर्त्तयन्तः विक्षेपणं प्रापयन्तः। पैत्रिकं पितृ-पितामहादिभ्यः प्राप्तम्। यशः कीर्त्तिम्। विनाशं निःशेषम्। गमयन्ति नयन्ति। च ईद्दशान्। आर्य्यधर्म्मात् सत्यसनातन-वैदिकपथात्। विमुखान् विरुद्धान्। जनेष्वधमा जनाधमा-स्तान् जनाधमान्। धिक् धिक्कारः स्यात्। धिग्योगे द्वितीय। यथा :—

"अभितसर्वतसोः कार्य्या धिगुपर्य्यादिषु त्रिषु।
द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते" ॥२२॥

अ० स० टीका—एतत्=यह। हि=ही। विचित्रम्=आश्चर्य है कि। (वहाँ) सखीस्वभावगाः=सखियोँ कासा वेश धारण करने वाले लोग। आत्मनः=अपने। शरीरम्=शरीर को प्रनर्त्तयन्तः=नचाते हुए, उछल कूद मचाते हुए। पैत्रिकम्=बाप दादोँ की कमाई हुई। यशः=कीर्त्ति को विनाशम्=नाश, चौपट। गमयन्ति=करते हैँ। ऐसे। आर्य्यधर्म्मात्=सत्य-सनातनवैदिकधर्म्म के। विमुखान्=विरोधी। जनाधमान् नीच पुरुषोँ को। धिक्=धिक्कार है ॥२२॥

भा० भा० टीका—और विचित्रता तो यह है कि-सखियोँ कासा वेश धारण करनेवाले लोग * अपने शरीर को नचाते हुए, बाप दादोँ की कमाई हुई कीर्त्ति को चौपट करते जाते हैँ। ऐसे सत्य सनातन वैदिक धर्म्म के विरोधी कापुरुषोँ को धिक्कार है ॥२२॥

नृत्यादिविषयासक्ताँस्तिरस्कृत्य कविः कल्पित-
वर्णिवेशगांस्तिरस्कुर्वन्नाह-

**विधाय वेशं सदृशञ्च वर्णिना-**
**मवर्णिनो दीर्घशिरोरुहादिभिः।**
**प्रवञ्चनायैव नृणामहर्निशं**
**भ्रमन्ति भूभारभरा गृहे गृहे ॥२३॥**

सु० सं० टीका—भुवः पृथिव्या भारं गुरुत्वं बिभ्रति पोषयन्ति, वर्द्धयन्तीति भूभारभराः (डुभृञ् धारणपोषणयो

---

* ऐसे लोग प्रायः देवमन्दिरोँ और नाटक कम्पनियोँ का आश्रय लेते हैँ और वहीँ पर नाचनूच कर ऐसे घृणित हाव भाव बताते हैँ कि जिनको

रिति धातोः पचादेराकृतिगणत्वात् "अच्' प्रत्ययः ) निरर्थक-जन्मानोऽपठिताः पठितमूर्खाः, केवलं पृथिव्या भारवर्द्धका-इत्यर्थः। वर्णो ब्रह्मचर्य्यं येषामस्तीति वर्णिनो ब्रह्मचारिणः। "वर्णाद्ब्रह्मचारिणि" इतीनिः प्रत्ययः"। न वर्णिनोऽवर्णिनः। नष्टब्रह्मचर्य्याः, वञ्चका इत्यर्थः। शिरसि रोहन्त्युत्पद्यन्त इति शिरोरुहाः कचाः "इगुपधज्ञाप्रीकिरःकः" इति कः। दीर्घाश्च ते शिरोरुहा दीर्घशिरोरुहास्त आदयो येषां ते दीर्घशिरोरुहादय-स्तै दीर्घशिरोरुहादिभिः ( आदि पदेन दण्डमृगचर्म्मरुद्राक्ष-सिन्दूर प्रभृतीनां कापट्येन धारणस्य ग्रहणम् ) वर्णिनां ब्रह्म-चारिणाम्। सदृशं तुल्यम्। वेशं स्वरूपम्। विधाय निर्म्माय। अहर्निशं नक्तन्दिवम् *। प्रवञ्चनाय प्रतारणाय। एव ही। नृणां मनुष्याणाम्। गृहे गृहे प्रतिगेहम्। भ्रमन्ति अटन्ति॥ २३॥

अ० अस० टीका—भूभारभराः=पृथ्वी पर केवल बोझा बढ़ाने वाले। अवर्णिनः=अब्रह्मचारी धूर्त्त लोग। प्रवञ्चनाय=लोगों को ठगने के लिये। एव=ही। दीर्घशिरोरुहादिभिः=लम्बी लम्बी जटा आदि केद्वारा। वर्णिनाम्=सच्चे ब्रह्म-चारियों के। सदृशम्=समान।। वेशम्= स्वरूप। विधाय=बनाकर। अहर्निशम्=रात दिन। नृणाम्=लोगों के। गृहे गृहे=घर घर। भ्रमन्ति=घूमा करते हैं॥ २३॥

---

देख देख कर स्वदेश का आधारभूत नवयुवक समाज एकदम अधोगति की ओर झुक पड़ा है, देश भक्त उसकी रक्षा करें।

* दिवा ब्रह्मचारीरूपेण रात्रौ चौररूपेणेत्यर्थः।

भा० भा० टीका—केवल पृथ्वी पर भार (बोझा) बढ़ानेवाले व्यर्थ-जन्मा दुराचारी लोग, लोगों को ठगने केलिये लम्बे लम्बे जटा जूटादि द्वारा सच्चे ब्रह्मचारियोंঃ के समान स्वरूप बनाकर दिन रात लोगों के घरों में चक्कर काटा करते हैं। तात्पर्य्य यह है कि दिन को तो ये लोग भेद लेनेके लिये और रात्रि को माल उड़ानेके लिये ही घूमा करते हैं ॥२३॥

कल्पितवर्णिवेशं विनिन्द्य कविर्दूषितवस्त्र धारणं
निषेधयन्नाह-

स्वदेशसम्भूतपवित्रखद्दरं
विहायमूढ़ाःकृमिकोशजातकम् ।
प्रदूषितंवस्त्रमयन्त आत्मनो
मलीमसं किन्न वपुः प्रकुर्वते ॥२४॥

सु० सं० टीका—स्वस्य देशः स्वदेशस्तस्मिन्सम्भूतः समुत्पन्नः स्वदेशसम्भूतः। खदति हिनस्ति सुखानीति खद् दुःखमित्यर्थः (खद स्थैर्येहिन्सायाञ्चेत्यस्माद्धिन्सार्थका-द्भौवादिकाद्धातोः क्विप्) तं द्रुणोति हिनस्तीति (द्रु हिन्साया-मित्यस्मात्स्वादिस्थाद्धातोः "ऋदोरप्" इत्यनेन "अप्) खद्दरः, पवित्रश्चासौ खद्दरः पवित्रखद्दरः, स्वदेशसम्भूतश्चासौ पवित्र-खद्दरः स्वदेशसम्भूतपवित्रखद्दरस्तं यथोक्तं, दुःखनाशकानन्द-वर्द्धकस्वच्छवस्त्रमित्यर्थः। विहाय त्यक्त्वा। मूढ़ाः मूर्खा-जनाः "अज्ञे मूढ़यथाजातमूर्खवैधेयबालिशाः" इत्यमरः।

---

ঃ सच्चे ब्रह्मारियों का यथार्थ वर्णन मत्प्रणीत "सदाचार-शिक्षा-निरूपण" नामक काव्य में देखिये।

प्रकर्षेण दूषितं प्रदूषितं घृणोत्पादकमित्यर्थः। कृमीणां कीट-विशेषाणां कोशाद् उदराद् जातं समुत्पन्नं कृमिकोशजातकम्। (कुत्सितार्थेऽकच् प्रत्ययः) अयन्तः प्राप्नुवन्तः धारयन्त-इत्यर्थः। (अय गतावित्यस्माद्भौवादिकाद्धातोः शतृ प्रत्ययः अनुदात्तेत्त्व-निमित्तस्यात्मनेपदस्यानित्यत्वात्। एवमेवान्यत्रापि। चक्षिङ्-ङित्यत्र ङित्करणमेव ज्ञापकम्) किम् उत। आत्मनः स्वस्य। वपुः शरीरम्। मलीमसं मलिनम् "मलीमसं तु मलिने पुष्पका-सीसलोहयोः" इति विश्वः। न नहि। प्रकुर्व्वते विदधति! अवश्यं मलिनं "कुर्व्वन्तीति भावः।

कौशेयवस्त्रधारणतो यावन्तः कीटा निधनं गच्छन्ति, तत्र त एव दोषभाजः सन्ति, येषां कृते वस्त्रमिदं वितन्यते। वैदेशिक-वस्त्रधारणवारणाय स्वदेशेति पदमत्र निहितम्। वैदेशिकवस्त्र-धारणतः स्वदेशजाः कुविन्दाः क्षुधयाऽहर्निशं विदूयन्ते, अतएव तन्निश्वासैर्वैदेशिकवस्त्रलुब्धा जनाः "अन्धन्तमः प्रविशन्तीति फलितोऽर्थः ॥२४॥

अ० स० टीका—स्वदेशसम्भूतपवित्रखद्दरम्=अपने देश में बने हुए पवित्र खद्दर (खादी) को। विहाय=त्याग कर। मूढाः=मूर्ख लोग। कृमिकोशजातकम्=कीड़ों के पेट से निकले हुए। प्रदूषितम्=ग्लानियुक्त। वस्त्रम्=कपड़े को। अयन्तः=प्राप्त होते हुए, धारण करते हुए। किम्=क्या। आत्मनः=स्वकीय। वपुः=शरीर को। मलीमसम्=मलीन। न=नहीं। प्रकुर्व्वते=करते हैं? ॥२४

भा० टीका—अपने देश में बने हुए पवित्र खद्दर को छोड़ कर अविवेकी लोग कीडों के पेट से निकले हुए घृणित रेशमी वस्त्र को धारण करते हुए क्या अपने शरीर को अपवित्र नहीं करते हैं ? अवश्य।

इस रेशमी वस्त्र के बनाने में जितने कीडे मरते हैं उन सबका पाप रेशमी वस्त्र धारण करने वालों के सिर परे है और विदेशी वस्त्र धारण करने से देश के जुलाहों को रात दिन भूखों मरना पड़ता है, इन भूखे जुलाहों की आहों से विदेशी वस्त्रों के प्रेमी तो अवश्य "अन्धन्तमः प्रविशन्ति" ॥ २४ ॥

कल्पितवर्णविशेषधृतधूर्त्तांस्तिरस्कृत्यकविस्तेभ्योनिज-
निजवंशजरक्षायै जनान्प्रार्थयन्नाह-

प्रदर्श्यते किं भवतां पुरोधिकं
दुरात्मभि र्यत्प्रथितञ्चदुष्कृतम्।
भवन्त एव प्रविचार्य्य रक्षितुं
स्ववंशजानत्र भवन्तु तत्पराः ॥२५॥

सु० सं० टीका—दुरात्मभिः कुत्सितपुरुषैः। यद् दुष्कृतं निन्दितभावः। अत्र महीतले। प्रथितं विस्तारितम्। तद् भवतां सज्जनानाम् पुरः अग्रे। अधिकं विस्तारपूर्व्वकम्। किं प्रदर्श्यते किं वर्ण्यते। मयेतिशेषः। च पुनः। भवन्तः स्वयम्। एव हि। प्रविचार्य्य एतत्सर्व्वं निश्चित्य। स्ववंशजान् स्वकीयकुलोद्भवान्। बालकानित्यर्थः। तेभ्यः। रक्षितुं अवितुम्। तत्पराः दत्तावधानाः भवन्तु ॥२५॥

अ० स० टीका—दुरात्मभिः=कुत्सित पुरुषों ने। यत्=जो। दुष्कृतम्=निन्दित भाव। अत्र=इस पृथ्वी पर। प्रथितम्=फैलाया है। तद्=उसका। भवताम्=आप सज्जनों के। पुरः=सामने। अधिकम्=विशेष रूपसे। किम्=क्या। प्रदर्श्यते=बयान किया जाय। च=अथवा। भवन्तः=आप। एव=ही। प्रविचार्य्य=यह सब सोच समझ कर। स्ववंशजान्=अपने वंशजों अर्थात् निज बालकों को। रक्षितुम्=बचाने के लिये। तत्पराः=तैयार। भवन्तु=होजाएं २५।

भा० भा० टीका—दुर्जनों ने जो अधर्म्म इस पृथ्वीपर फैलाया है उस का आप महानुभावों के सामने अधिक क्या बयान किया जाय, आप ही यह सब कुछ सोच विचार कर अपनी सन्तान को उन दुष्टों से बचाने के लिये तैयार होजाइये ॥ २५ ॥

अधार्म्मिकसङ्गतिनिषेधनपरः कविस्तत्र
कर्त्तव्यं निर्धारयन्नाह-

अधर्म्मभाजां न कदापि सौहृदं
विधेयमत्रार्य्यजनैर्निजेच्छया।
भवेत्तु तानेव च वैदिकायने
समाह्वयेयु र्न पतन्तु धर्म्मतः ॥२६॥

सु० सं० टीका—ऋच्छन्ति धर्म्मार्थकाममोक्षान्प्राप्नुवन्तीत्यार्य्याः (ऋ गतावित्यस्माद्भौवादिकाद्धातोः "ऋहलोर्ण्यत्" इत्य-

नेन ण्यत्प्रत्ययः ) आर्य्याश्च ते जना आर्य्यजनास्तैः आर्य्यजनैः धार्म्मिकपुरुषैः । निजेच्छया स्वकीयकाङ्क्षया । कदापि कस्मिन्नपि काले । अधर्म्मभाजाम् ( न धर्म्मोऽधर्म्मः कल्मषं पापमित्यर्थः, तं भजन्ती लभन्त इत्यधर्म्मभाजः "भज सेवायामित्यस्माद्भौवादिकाद्धातोर्भजोण्विरित्यनेन ण्विः" तेषां ) सौहृदं मैत्री । न नहि । विधेयं करणीयम् । च कदाचिद् । भवेत् ( मैत्री ) स्यात् । तु तुर्हि । तान् पापिष्ठान् । एव हि । अत्र अस्मिन् । वैदिकायने सत्यसनातनधर्म्मे ( वेदे भवं वैदिकम् तस्मिन्मार्ग इत्यर्थः) समाह्वयेयुः सम्बोधयेयुः । (किन्तु स्वयमेव) धर्म्मतो न पतन्तु । अधर्म्माचरणं न स्वीकुर्व्वन्त्वित्यर्थः ।

अ० स० टीका—आर्य्यजनैः=धार्म्मिक पुरुषों को । निजेच्छया=अपनी इच्छा से । कदापि=कभी भी । अधर्म्मभाजाम्=अधर्म्मी अर्थात् अनार्य्यों की । सौहृदम्=मित्रता । न=नहीं । विधेयम्=करनी चाहिये । भवेत्=( और यदि ) हो जाय । तु=तो । तान्=उनको । एव=ही । अत्र=इस । वैदिकायने=सत्यसनातन वैदिक धर्म्म में । समाह्वयेयुः=बुलालें (किन्तु स्वयं) । धर्म्मतः=धर्म्म से । न=न । पतन्तु=गिरें ॥ २६ ॥

भा० भा० टीका—आर्य्यपुरुषों को अपनी इच्छा से कभी भी अधर्म्मियों की मित्रता नहीं करनी चाहिये किन्तु प्रसङ्गवश अधर्म्मियों के साथ मित्रता हो जाय, तो उन अधर्म्मियों ही को धर्म्म में ले आवें धर्म्म खुद से न गिर जावें । अर्थात् अधर्म्मियों को भी धार्म्मिक ( आर्य्य ) बना लें, खुद अधर्म्मी न हो जावें ॥ २६ ॥

अथ कर्म्मकरणे जीवात्मनां स्वातन्त्र्यं तज्जन्यफलोपभोगे च पारतन्त्र्यं प्रदर्शयन्नाह कविः —

स्वतन्त्र एवास्ति शरीरिणाञ्चयः
शुभाशुभानामिहकर्म्मणां कृतौ ।
फलोपभोगे परमार्य्ययोगिना
ध्रुवं पराधीन इतीरितं मतम् ॥२७॥

सु० सं० टीका—इह अस्मिञ्जगति। शरीरं वपुर्येषा-मस्तीति शरीरिणो जीवात्मानः "अत इनिठनौ" इत्यनेन "इनिः" प्रत्ययः। तेषां शरीरिणाम्। चयः समूहः। शुभानि चाशुभानि च शुभाशुभानि वेदविहिताविहितानीत्यर्थस्तेषां शुभाशुभानाम्। कर्म्मणां कृत्यानाम्। कृतौ करणे सम्पादनयित्यर्थः। स्वतन्त्रः स्वच्छन्दः। एव हि। अस्ति विद्यते। परं किन्तु। फलानां कृत-कर्म्मोपलब्धीनाम्, उपभोगः आस्वादनं फलोपभोगस्तस्मिन्फलोप-भोगे। पराधीनः परतन्त्रः। इति ईदृशम्। ध्रुवं निश्चितम् "स्थिरे नित्ये निश्चिते च ध्रुवं खेऽजस्रतर्कयोः" इति हेमचन्द्रः। मतं अनु-मतिम्। आर्य्ययोगिना वसुदेवदेवकीसुतेन महात्मना श्रीकृष्ण-चन्द्रेणेत्यर्थः। ईरितं प्रकटितम्। यथा "कर्म्मण्येवाधिकारस्ते-मा फलेषु कदाचन" इति ॥ २७ ॥

अ० स० टीका—इह=इस संसार में। शरीरिणाम्=शरीर-धारियों का। चयः=समूह। शुभाशुभानाम्=भले व बुरे।

कर्म्मणाम्=कर्मों के। कृतौ=करने में। स्वतन्त्रः=स्वतन्त्र, आज़ाद। एव=ही। अस्ति=है। परम्=किन्तु। फलोपभोगे=फलों को भोगने में। पराधीनः=परतन्त्र है। इति=इस प्रकार। ध्रुवम्=निश्चित। मतम्=मत (अनुमति) आर्य्ययोगिना=आर्य्ययोगी महात्मा श्रीकृष्ण ने। ईरितम्=प्रकट किया है ॥ २७ ॥

भा० भा० टीका—इस संसार में जीव शुभाशुभ कर्म्मों के करने में स्वतन्त्र हैं और किये हुए कर्म्मों के फलों को भोगने में परतन्त्र हैं। यही सिद्धान्त आर्य्ययोगी महात्मा श्रीकृष्ण ने (गीता में) बताया है ॥ २७ ॥

सप्तविंशतितमश्लोकस्योदाहरणं प्रदर्शयन्

कविराह—

फलं शुभं हृद्यवधार्य्य तस्करो
हरत्यजस्रं द्रविणं मुदा नृणाम्।
धृतो भवत्येव स तैश्च कर्हिचि-
त्सदा तु सर्व्वं प्रतिकूलमीक्षते ॥२८॥

सु० सं० टीका—तस्करश्चौरः। हृदि मनसि। शुभं-कल्याणदम्। फलं कर्म्मोपलब्धिम्। अवधार्य्य निश्चित्य। अजस्रं निरन्तरम्। मुदा प्रसन्नेन, चेतसेतिशेषः। नृणां मानवानाम्। द्रविणं धनम् "द्रविणं काञ्चने धने" इति हेमचन्द्रः। हरति चोरयति। कर्हिचित् कस्मिन्नपि काले।

तु। तैर्गतधनैरित्यर्थः। स चौरः। धृतो निगृहीतः। भवत्येव, नास्त्यत्र सन्देहः। तदा तस्मिन्काले। सर्वं अशेषम्। प्रतिकूलं आत्मनो विपरीतम्। ईक्षते पश्यतीति ॥ २८ ॥

अ० स० टीका—तस्करः=चौर। हृदि=अपने मन मे। शुभम्=अच्छा। फलम्=नतीजा, फल। अवधार्य्य=निश्चय करके। अजस्रम्=लगातार। मुदा=प्रसन्नता पूर्वक। नृणाम्=मनुष्योँ का। द्रविणम्=धन। हरति=चुराता है। कर्हिचित्=कभी न कभी। तु=तो। तः=उन मनुष्योँ के द्वारा। सः=वह चौर। धृतः=पकड़ा। भवत्येव=जाता ही है। तदा=तब। सर्व्वम्=सब। प्रतिकूलम्=उलटा ही। इक्षते=देखता है ॥२८॥

भा० भा० टीका—चोर अपने मन मेँ अच्छा नतीजा सोच कर प्रसन्नता पूवक लगातार मनुष्योँ का धन चुराता रहता है, किन्तु जब वह उन मनुष्योँ के द्वारा पकड़ा जाता है तब अपने वाञ्छित फल से विपरीत ही फल पाता है॥ २८॥

तमेवाष्टाविंशतितमस्य पद्यस्य विषयं पोषय-
न्नाह कविरिहापि—

प्ररोहयेन्निम्बतरुञ्च कोपि ना
समिच्छतादाम्रफलं भुवस्तले।
भवन्त एवात्र वदन्तु निर्णयं
कथं स शक्नोति समेतुमीप्सितम् ॥२६॥

सु० सं० टीका—कोऽपि कश्चिदपि। ना मनुष्यः "णीञ् प्रापणे" इत्यस्माद्भौवादिकाद्धातोः "नयतेर्डिच्च" इत्यनेन ऋ प्रत्ययः। निम्बतरुं निम्ब इतिनामधेयं वृक्षम्। भुवस्तले पृथिव्याम्। प्ररोहयेत् तद्बीजारोपणं कुर्य्यात्। (पुनस्तस्मान्निम्बतरोः) आम्रफलं आम्र इति सञ्ज्ञकस्य वृक्षस्य फलं रसालमित्यर्थः। समीच्छतात् वाञ्छेत्। अत्र अस्मिन्विषये। भवन्त एव निर्णयं यथा निश्चितं भवेत्तथा। वदन्तु। किल। सः निम्बतरुप्ररोहको जनः। ईप्सितं वाञ्छितं, आम्रफलमित्यर्थः। कथं केन प्रकारेण। समेतुं लब्धुम्। शक्नोति अर्हति। निम्बतरूद्भूतं कटुकफलमेव प्राप्नोति। नतु रसालमिति तात्पर्य्यम्॥ २६॥

अ० स० टीका—कः=कोई। अपि=भी। ना=मनुष्य। निम्बतरुम्=निम्ब नामक वृक्ष को। भुवस्तले=ज़मीन में। प्ररोहयेत्=बोवे। च=और। (उस निम्बवृक्ष से) आम्र फलम्=आम का फल। समिच्छतात्=चाहे। अत्र=इस विषय में। भवन्तः=आप। एव=ही। निर्णयम्=अपने निश्चित मत को। वदन्तु=कहिए कि। सः=वह निम्ब को उपजानेवाला मनुष्य। ईप्सितम्=चाहे हुए फल को। कथम्=कैसे। समेतुम्=प्राप्त करने केलिये। शक्नोति=समर्थ हो सकता है?॥ २६॥

भा० भा० टीका—यदि कोई आदमी नीम का वृक्ष लगाए और उससे आम का फल चाहे तो कैसे पासके ( नीम से तो केवल कड़वी निम्बोलियाँ मिलती हैं आम नहीं" ॥ २६ ॥

कर्म्मणामेव प्राधान्यं प्रतिपादयन्
भूयोऽप्याह कवि :—

यथाविधं कर्म्म करोति मानवः
फलं समेतीति ततस्तथाविधम् ।
जगत्सुबद्धं सकलञ्च कर्म्मभि-
र्विचार्य्य सर्वैः सुकृतञ्चरेत्तिमम् ॥३०॥

सु० सं० टीका—मानवः पुरुषः । यथाविधं यादृशम् । कर्म्म करोति । ततस्तस्मात्कर्म्मण इत्यर्थः । च पुनः । तथाविधं तादृशम् । फलं समेति प्राप्नोति । सकलं सम्पूर्णम् । जगत् संसारम् । कर्म्मभिः सुवद्धं सम्यक्तया वेष्टितम् । इति विचार्य्य सर्व्वैः सकलै र्जनैः । सुकृतं धर्म्मकर्म । चरेत्तिमं आचरितव्यम् ॥ ३० ॥

अ० स० टीका—मानवः=मनुष्य । यथाविधम्=जैसा । कर्म्म=कर्म्म, व्यवसाय । करोति=करता है । ततः=उस कर्म्म से । च=फिर । तथाविधम्=वैसा ही । फलम्=फल । समेति=पाता है । सकलम्=सम्पूर्ण । जगत्=संसार । कर्म्मभिः=कर्म्मों से । सुबद्धम्=बँधा हुआ है । इति=ऐसा । विचार्य्य=विचार कर । सर्व्वैः=सब मनुष्यों को । सुकृतम्=धर्म्म को ही । चरेत्तिमम्=पालना चाहिये ॥ ३० ॥

भा० भा० टीका—मनुष्य जैसा कर्म्म करता है वैसा ही फल पाता है । यह सम्पूर्ण जगत् कर्म्मों से बँधा हुआ है, ऐसा विचार कर सब मनुष्यों को धर्म्म ही का आचरण करना चाहिए ॥ ३० ॥

यदि कोप्येवं वदेत् "किल दुष्कर्म्माण्याचरन्तोपि मनुष्याः सुखाशिनो दृश्यन्ते, पुनः सुकृतेन किम् ?"

अत आह कवि :—

नरो यदा दुष्कृतमेति तत्क्षणं
फलं न तद्भूतमथाऽनुभूयते ।
शनैःशनैःकृन्तति सौख्यवल्लरीं
विवर्द्धयत्त्यापदनोकहं पुनः ॥३१॥

सु० सं० टीका—नरो मनुष्यः । यदा यस्मिन्काले । दुष्कृतं अधर्म्मम् । एति गच्छति, करोतीत्यर्थः । तत्क्षणं तस्मिन् क्षणे । तस्माद् दुष्कृताद् भूतं समुत्पन्नम् तद्भूतम् । फलम् दुःखरूप-परिणाम इति भावः । अथ कदाचित् । तेन नरेणेत्यथः । न नहि । अनुभूयते ज्ञायते ( किन्तु तद् दुष्कृतम् तस्य दुराचारिणः पुरुषस्य ) सौख्यवल्लरी सुखस्य भावः सौख्यम्, तदेव वल्लरी लता सौख्यवल्लरी तां तथोक्ताम् । वल्लरीति शब्दो यद्यपि मञ्जर्य्य-र्थकस्तथाप्यत्र लतार्थे प्रयुक्तः, अन्यत्रापि दृष्टत्वात्। शनैः शनैः मन्दं मन्दम् । कृन्तति छिनत्ति । पुनः भूयश्च । आपदां विपत्तीना-मनोकहो वृक्ष आपदनोकहस्तमापदनोकहम् । विवर्द्धयति वृद्धिं नयतीर्त्थः । अधर्म्मः शनैः शनैः सुखं नाशयित्वा दुःखं समु-त्पादयतीति भावः ॥ ३१ ॥

अ० स० टीका—नरः=मनुष्य । यदा=जिस समय । दुष्कृतम् =पाप को । एति=प्राप्त होता है,करता है । तत्क्षणम्=उसी समय ।

तद्भूतम्=उस पाप से उत्पन्न। फलम्=फल को। अथ=शायद्। न=नहीं अनुभूयते=जान सके। (किन्तु वह अधर्म्म उस मनुष्य की) सौख्यवल्लरीम्=सुखरूप लता को। शनैः शनैः=धीरे धीरे। कृन्तति=काटता रहता है। पुनः=फिर। आपद्नोकहम्=दुःखरूपवृक्ष को। विवर्द्धयति=बढ़ाता रहता है॥ ३१॥

भा० भा० टीका—मनुष्य जब अधर्म्म को ग्रहण करता है, तो अधर्म्म का फल शायद उसे उस वक्त न जान पड़े, किन्तु वह अधर्म्म अपने में आसक्त मनुष्य की सुखलता अर्थात् आनन्ददायक सामग्रियों को धीरे धीरे नष्ट कर देता है और आनन्द के स्थान में अनेक विपत्तियाँ खड़ी कर देता है॥ ३१॥

मूढ़ात्प्रबोधयितुं कविरीश्वरं
प्रार्थयन्नाह-

समेत्य तेऽपीदमुदारपद्यजं
सुकाव्यमानन्दमयेऽध्वनि ध्रुवम्।
चरन्त ऐश्वर्य्यमियुः सुसाधनै-
रितीह याचे जगतामधीश्वरम्॥३२॥

सु० सं० टीका—तेऽपि विधर्म्मिणोऽपीत्यर्थः। उदारपद्यजं सरलैःश्लोकैर्निष्पन्नम्। इदं एतत्। सुन्दरञ्च तत्काव्यं सुकाव्यम्, धर्म्ममार्गप्रबोधनपरत्वात्। समेत्य प्राप्य। आनन्दमये सुखपूर्णे परमात्मोपदि[illegible] त भावः। अध्वनि मार्गे। चरन्तः विहरन्तः। सुसाधनैः सदुपायैः (दशलक्षणान्येव सुन्दरसाधनानीति भाव स्तैः) ध्रुवं निश्चितम्। ऐश्वर्य्यं

महतीं सम्पदाम्। इयुः प्राप्नुयुः। इति अमुना प्रकारेण। (अहं) इह अस्मिन्विषये। जगतां लोकानाम्। अधीश्वरं स्वामिनम्। याचे प्रार्थये। अकथितञ्चेति कर्म्मसञ्ज्ञा ॥३२॥

अ० स० टीका—ते=वे विधर्म्मी पुरुष। अपि=भी। उदारपद्यजम्=सरल श्लोकों से बने हुए। इदम्=इस। सुकाव्यम्=सुन्दर काव्य को। समेत्य=पाकर। आनन्दमये=सुखों से परिपूर्ण (वैदिक)। अध्वनि=मार्ग मे। चरन्तः=चलते हुए। सुसाधनैः =दश लक्षण स्वरूप सुन्दर साधनों के द्वारा। ध्रुवम्=अवश्य। ऐश्वर्य्यम्=ऐश्वर्य्य अर्थात् सब प्रकार की सम्पदा को। इयुः =पावें। इति=इस प्रकार। इह=इस विषय में। जगताम् =संसार के। अधीश्वरम्=स्वामी, परमात्मा से। याचे= याचना करता हूँ ॥ ३२ ॥

भा० भा० टीका—वे दुष्कर्म्मी पुरुष भी सरल पद्यों वाले इस काव्य को पाकर सुखदायक सनातन वदिक मार्ग में विचरते हुए धृत्यादि दश लक्षण स्वरूप सुन्दर साधनों के द्वारा ऐश्वर्य्य को प्राप्त हों, ईश्वर से मैं यही याचना करता हूँ ॥ ३२ ॥

अतः काव्यपूर्त्तिं प्रकुर्व्वन्नाह कविः—

मनूदितैर्धार्म्मिकलक्षणैर्युतं
जघन्यसत्याः शिशुरक्षणक्षमम्।
सुतेन नारायणसूरिणां मया
विनिर्मितङ्काव्यमगात्सपूर्णताम् ॥३३॥

सु० सं० टीका—मनुना स्मृतिशास्त्रप्रवक्त्रा केनचिन्महर्षिणा उदितानि कथितानि मनूदितानि तैर्मनूदितैः। धर्म्मस्येमानि धार्म्मिकाणि, धार्म्मिकाणि च तानि लक्षणानि धार्म्मिकलक्षणानि तै र्धार्म्मिकलक्षणैः। युतं समन्वितम्। हि निश्चयेन। जघन्या गर्हिता सृतिर्मार्गम् जघन्यसृतिस्तस्याः जघन्यसृत्याः, निन्दितमार्गादित्यर्थः। "जघन्यं मोहने क्लीवं चरमे गर्हितेऽन्यवत्" इति मेदिनी। शिशूनां बालकानां रक्षणं शिशुरक्षणम्, तस्मिन्क्षमं समर्थमिति शिशुरक्षणक्षमम्। नारायणसूरिणां श्रीमन्नारायणेतिलब्धसञ्ज्ञकानां केषाञ्चित्पण्डितप्रवराणाम्। सुतेन पुत्रेण। मया कृष्णचन्द्रेणेत्यर्थः। विनिर्म्मितं विरचितम्। काव्यम्, पूर्णतां समाप्तिम्। अगास्त अगमत्॥ ३३॥

अ० स० टीका—मनूदितैः=महर्षि मनु के बताये हुए। धार्म्मिकलक्षणैः=धर्म्म के लक्षणों से। युतम्=युक्त (और)। हि=निश्चयपूर्वक। जघन्यसृत्याः=दुष्टमार्ग से। शिशुरक्षणक्षमम् =बालकों को बचाने में समर्थ, (यह) मया=मुझ। नारायणसूरिणाम्। श्रीमन्नारायण सूरि के। सुतेन=पुत्र के द्वारा। विनिर्म्मितम्=बनाया हुआ। काव्यम्=काव्य। पूर्णताम्= समाप्ति को अगास्त=प्राप्त हुआ॥ ३३॥

भा० भा० टीका—महर्षि मनु के बताये हुए इत्यादि धर्म्म लक्षणों से युक्त और दुष्टमार्गों से बालकों को बचाने में समर्थ तथा श्रीमन्नारायणसूरि के पुत्र कृष्णचन्द्र का बनाया हुआ यह काव्य पूर्ण हुआ॥ ३३॥

काव्यपूर्त्तिङ्कृत्वा कविराशीर्वादान्समाचरन्नाह-

यान्ति प्रकम्पनगतिं पिशुनाः प्रचारात् ।
सद्यः पराभवपदञ्च विपक्षिणोऽलम् ।
मोदं सुकर्म्मनिरता भुवि यस्य नित्यं
धर्म्मः स एव दयया ऽवतु वैदिको नः ॥३४॥

सु० सं० टीका—यस्य धर्म्मस्य। भुवि पृथिव्याम्। प्रचारात् विस्तारात्। पिशुनाः खलाः। सद्यः तत्क्षणम्। प्रकम्पनगतिं भयाकुल्याकुलत्वम्। न्त प्राप्नुवन्ति। विपक्षिणो विरोधिनः, नास्तिका इत्यर्थः। पराभवस्य पराजयस्य पदं स्थानम्, तिरस्कारमित्यर्थः (यान्ति)। सुकर्म्मनिरताः धर्म्मकर्म्मसु संलग्नाश्च जनाः। मोदं प्रसन्नताम्। (यान्ति) स एव वदिको धर्म्मः। दयया कृपया। नित्यं सदैव। नः अस्मान् आर्य्यपुरुषानित्यर्थः। अवतु रक्षतु। वृत्तमिदं वसन्ततिलकाख्यम्, "वसन्ततिलका त्भौ जौ गौ" इति पिङ्गलाचार्य्याः ॥३४॥

अ० स० टीका—भुवि=पृथ्वीपर। यस्य=जिसके। प्रचारात्=प्रचार से। पिशुनाः*=दुर्ज्जन। सद्यः=शीघ्र ही। प्रकम्पनगतिम्=भय को। विपक्षिणः=विरोधी जन। पराभवपदम् =पराजय को। च=और। सुकर्म्मनिरताः=धार्म्मिक पुरुष। मोदम्=आनन्द को। यान्ति=पाते हैं। सः=वह। एव=

* पिशुन उसे कहते हैं जो समझ बूझ कर भी उलटा चलता है और अपने समान आचरणवाले को पाकर कहता है—तुम जैसा करते हो वैसा

ही। वैदिकः=वैदिक। धर्म्मः=धर्म्म। दयया मेहर्बानी के साथ। नित्यम्=सदैव। नः=हमलोगों की। अवतु=रक्षा करे॥ ३४॥

भा० भा० टीका—पृथ्वी पर जिसके प्रचार से दुष्ट लोग शीघ्र ही काँपने लगते हैं, विपक्षी लोग पराजय को पाते हैं और सज्जन आनन्द मनाते हैं, वही वैदिक धर्म्म कृपा करके सदैव हम लोगों की रक्षा किया करे। यह वसन्ततिलकावृत्त है—जिस में क्रम से एक तगण, एक भगण, दो जगण और दो गुरु हों उसे वसन्त तिलकावृत्त कहते हैं॥ ३४॥

एतत्कृत्युन्नत्यै कविरीश्वरं प्रार्थयन्नाह—

विबुधवृन्दविनोदविवर्द्धिनी
निगमधर्म्मसुलक्षणभूषिता।
कृतिरियन्नु ममार्य्यकवेः प्रभो
जगति यातु जवेन जयं सदा॥३५॥

सु० सं० टीका—विबुधानां पण्डितानां वृन्दः समूहो विबुधवृन्दस्तस्मिन्। विनोदं आनन्दं विवर्द्धयतीति विबुध-

---

हो मैं भी करता हूँ, इस लिये तुम्हारी भी चुप और हमारी भी चुप करते हो वैसा करते चलो।

विरोधी तो जब तक यथार्थ बात को नहीं समझता है तभी तक अपने संकल्प की सिद्धि के लिये ज़िद्द किया करता है, किन्तु समझने पर झूठ को त्याग कर सत्य को स्वीकार कर लेता है। परन्तु पिशुन तो सत्य को स्वीकारता हुआ भी निज के निन्दित कर्म्मों का गुप्त रीति से भीतर ही भीतर प्रचार करता रहता है॥

वृन्दविनोदविवर्द्धिनी। निगमस्य ऋगादिवेदचतुष्टयस्य धर्म्मो निगमधर्म्मास्तस्य सुलक्षणानि धृत्यादीनीति निगमधर्म्मसुलक्षणानि तैर्भूषिता अलङ्कृता निगमधर्म्मसुलक्षणभूषिता। इयं मम आर्य्यकवेः कृति र्व्यवसायः। नु निश्चयम्। जगति संसारे। जवेन वेगेन। सदा जयं उत्कर्षम्। यातु प्राप्नुयात्। वृत्तमिदं द्रुतविलम्बितम् "द्रुतविलम्बितं न्भौ भ्रौ" इति पिङ्गलाचार्य्यः॥ ३५॥

अ० स० टीका—विबुधवृन्दविनोदविवर्द्धिनी=पण्डितों के समुदाय में आनन्द को बढ़ानेवाली। निगमधर्म्मसुलक्षणभूषिता=वैदिकधर्म्म के लक्षणों से अलङ्कृत। इयम्=यह। मम=मुझ। आर्य्यकवेः=आर्य्यकवि की। कृतिः=कृति। नु=अवश्य। जगति=इस संसार में। जवेन=वेग से। सदा=हमेशा। जयम्=जय को। यातु=प्राप्त हो॥ ३५॥

भा० भा० टीका—विद्वन्मण्डली को आनन्द देनेवाली और वैदिक धर्म्म के सुन्दर लक्षणों से अलङ्कृत यह मुझ आर्य्य कवि की कृति संसार में सदैव वेग से जय को प्राप्त हो। यह द्रुतविलम्बित वृत्त है, इसके प्रत्येक चरणमें क्रम से एक नगण, दो भगण और एक रगण हो॥ ३५॥

भूयोऽपीश्वरं प्रार्थयन्कविराह—

भवतु भवतु नित्यं धर्म्मभाजां सुवृद्धिः
शमयतु जगदीशो दुष्कृतां दुष्टवृत्तिम्।
कविकुलमहिमानं वर्द्धयन्तीव वल्ली
प्रसरतु भुवनेऽस्मिँल्लालपौत्रस्य कीर्त्तिः॥३६॥

सु० सं० टीका—धर्म्मं भजन्तीति धर्म्मभाजस्तेषां सुवृद्धिः समुन्नतिः। नित्यं सदा। भवतु भवतु अवश्यं भूयादित्यर्थः। जगतां लोकानां ईशः स्वामी जगदीशः परमात्मा। दुष्कृतां अधर्म्मसेविनाम्। दुष्टा चासौ वृत्तिर्दुष्प्रवृत्तिस्तां निन्दित-कल्पनां ब्रह्मचर्य्यादियमनियमविघातिनीं दुष्टकाव्यकल्पना-मित्यर्थः। शमयतु विनाशं गमयतु। कवीनां कुलं कविकुलं तस्य महिमा कविकुलमहिमा तं कविकुलमहिमानम्। अस्मिन् भुवने जगति वर्द्धयन्ती विस्तारमापयन्ती लालस्य* श्रीमल्लाल-सूरिणः पौत्रो लालपौत्र †स्तस्य एतत्काव्यनिर्म्मातुः। कीर्त्ति-र्यशो। वल्लीव लतेव। प्रसरतु विस्तारं प्राप्नुयात्। मालिनी-वृत्तमिदम् तल्लक्षणं तु "मालिनी नौ म्यौ य्" इति पिङ्गला-चार्य्येण भाषितम्।

ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलमवश्यं कर्त्तव्यमिति शिष्टानामाचारस्तमनुसृत्य काव्यस्यादौ नमस्कारात्मकम्, अन्ते चाशीर्वादात्मकं पश्यन्तु पाठकाः, वस्तुनिर्देशात्मकं तु प्रतिपद्यं समलङ्करोतीत्यलम्॥ ३६॥

अ० स० टीका—धर्म्मभाजाम्=धर्म्मात्माओं की। सुवृद्धिः= समुन्नति, वढ़ती। नित्यम्=सदा। भवतु भवतु=अवश्य हो। जगदीशः=संसार का स्वामी, परमात्मा। दुष्कृताम्=अधर्मियों की। दुष्टवृत्तिम्=निन्दितकल्पना जिससे ब्रह्मचर्य्यादि यम-

* नामैकदेश ग्रहणे नामग्रहणम्।

† श्रीमल्लालसूरिणां पुत्राः श्रीमन्नारायणसूरिणस्तेषां पुत्रोऽहमेतत्काव्य-कवयिता कृष्णचन्द्रस्तस्येत्यर्थः।

नियमों के पालने में बाधा उत्पन्न होती हो, ऐसी दुष्ट काव्य रचना को। शमयतु=नाश करे। कविकुलमहिमानम्= कवियों के कुल की महिमा को। अस्मिन्=इस। भुवने= जगत् में। वर्द्धयन्ती=बढ़ाती हुई। लालपौत्रस्य=श्रीमल्लाल-सूरि के पौत्र का। कीर्त्तिः=यश। वल्लीव=लता के समान। प्रसरतु=विस्तार को प्राप्त हो॥ ३६॥

भा० भा० टीका—धर्म्मात्माओं की नित्य समुन्नति हो। ईश्वर अधर्म्मियों की निन्दित कल्पना जिससे ब्रह्मचर्य्यादि यम नियमों के पालने में बाधा उत्पन्न होती हो, ऐसी दुर्व्यसनों मे फँसानेवाली दुष्ट काव्य कल्पना का नाश करे। कवियों के कुल की महिमा को इस संसार में बढ़ाती हुई श्रीमल्लाल सूरि के पौत्र की कीर्त्ति लता के समान विस्तार को प्राप्त हो॥ यह मालिनी छन्द है, जिस में क्रम से दो नगण, एक मगण और दो यगण हों उसे मालिनी छन्द कहते हैं॥३६

इति श्री मेवाड़प्रदेशचित्तौरगढ़मण्डलान्तर्गतविल्वपुर-
वास्तव्यद्विवेदुपाह्वमौद्गलवंशोद्भवश्रीमन्नारायणसूरि-
सूनुश्रीमदार्य्यपण्डितकृष्णचन्द्रसूरिविरचितं,
(सुबोधिनीसंस्कृतटीकया, अन्वयार्थ-
बोधिनीसरलाटीकया, भावार्थ-
बोधिनीभाषाटीकया च सम-
लङ्कृतं) धार्म्मिकलक्षण-
वर्णनं नाम काव्यं
पूर्णतामगात्॥
ओं शान्तिः शान्तिः शान्तिः॥

स्वर्गवासी

# श्रीमान् बाबू वीराभाई मावजी चावड़ा

का

## संक्षिप्त-वृत्तान्त।

श्रीमान् बाबू वीराभाई चावड़ा का जन्म सँव्वत् १९२६ मेँ कच्छ देश के कुम्भारिया ग्राम मेँ हुआ, इनके पिता का नाम मावजी चावड़ा था। ये मावजी के इकलौते पुत्र थे। बचपन मेँ साधारण विद्याभ्यास करके घरू काम काज मेँ लग गये और थोड़े ही दिनों मे कुटुम्ब-निर्वाह का समस्त भार अपने ऊपर लेकर पिता (मावजी) को ईश्वर भजन केलिये अवकाश दे दिया, ये प्रेमपूर्वक पिताजी की सेवा किया करते थे और यही सोचा करते थे कि आर्थिक सँकट कैसे दूर हो। इन्होंं ने सँव्वत् १९५८ तक रेलवे कण्ट्राक् और कितने ही काम किये, जिन मे इन को खूब सफलता मिली। आर्थिक दशा मेँ उत्तरोत्तर वृद्धि होती गयी और धार्मिक कार्य्यों की तरफ भी इनके मन का झुकाव विशेष होने लगा। फिर झरिया आये, यहाँ कण्ट्राक् का बन्दोबस्त न हो सका, इसलिये कोलियारी के लिये कोयले की ज़मीन खरीद कर खान का काम चालू कर दिया।

कार्य्य के आरम्भ मेँ अनेक कठिनाईयाँ उपस्थित हुईँ, किन्तु इन्होंं ने धृति (धीरज) को नहीँ छोड़ा, बराबर आगे बढ़ते

हो गये। इस काम मे भी इनको पूर्ण सफलता मिली और माइनिङ्ग डिपार्टमेण्ट गवर्नमेण्ट आफ इण्डिया ने इन को सेकेण्ड क्लास माइनिङ्ग सर्व्हिस सार्टिफिकेट दिया, तथा दस बारह बरस तक इन्हों ने बतौर माइनिङ्ग मैनेजर के काम चलाया।

इन्हों ने अपने दोन्हों पुत्रों (नानजी भाई और कानजी भाई) को भी विद्याभ्यास कराकर व्यापार विषय मे खूब निपुणता प्राप्त कराई। अनेक स्थानों मे अपनी कोलियारियाँ कायम कीं।

वीराभाई हमेशा सादी चाल से रहते थे, अधिकांश समय इनका ईश्वर भजन और विद्वानों की सङ्गति मे बीतता था। जब ये वृद्धावस्था को पहुँचे तो इन के सुपुत्रों ने अपनी कुल-प्रथा के अनुसार समस्त कार्य्य भार अपने ऊपर लेकर इनको ईश्वर भजन व सत्सङ्गति केलिये विशेष अवकाश दे दिया।

सँव्वत् १९७४ मे जब प्रभास पाटण के श्रीशङ्कराचार्य्य श्री१०८ श्रीस्वामी त्रिविक्रमतीर्थजी अपने गुरु महाराज श्री १०८ श्रीस्वामी विष्णुतीर्थजी के साथ जयरामपुर आये तो वीराभाई ने बडे सन्मान से इन का स्वागत किया, और उनकी देख रेख मे एक "महापुरुष याग" कराया। सँव्वत् १९७५ मे इन दोन्हों महात्माओं के और निज धर्म्म पत्नी श्रीमती धन्नीबाई के साथ निज व्यय से भारतवर्ष के प्राय: सब तीर्थों मे भ्रमण किया।

विद्याविलास मे वीराभाई का विशेष प्रेम था, काशी मे संस्कृत का अभ्यास करनेवाले विद्यार्थियों को लगातार स्कॉलर-

शिप देते रहे, झरिया जयरामपुर एँग्लोव्हर्नाक्यूलर स्कूल के फण्ड मे अच्छी रकम दी है। जयरामपुर लायब्रेरी फण्ड मे भी योग दिया है और समय समय पर स्कूल के विद्यार्थियों को पारितोषिक भी दिया करते थे।

कोई भी अनाथ, अन्ध, पङ्गु वग़ैरः वीराभाई के दरवाजे पर पहुँच जाता था तो वे उसको अन्न वस्त्रादिक देकर सन्तुष्ट करते थे, निराश किसी को भी नहीं होने देते थे।

संवत् १६७८ के आश्विन मास के कृष्ण पक्ष की सप्तमी के दिन सांसारिक सुखों से विरक्त हो ५२ वर्ष की अवस्था मे वीराभाई परम धाम को पहुँच गये॥

वर्त्तमान समय मे वीराभाई के दोन्हों पुत्र-रत्न ( नानजी भाई और कानजी भाई ) भी परोपकारादिक-धार्म्मिक कृत्यों की उन्नति के लिये अपने पिता के समान ही यत्न कर रहे है। इस पुस्तक के मुद्रण व्यय के लिये आर्थिक सहायता देने वालों में ये भी हैं *। ईश्वर इनको दीर्घजीवी बनावे। और इनके शुभ मनोरथों को सफल करें॥

---

* इनके अतिरिक्त और भी जिन जिन धर्म्मप्रेमियों ने इस कार्य्य में सहायता देकर मेरा उत्साह बढ़ाया है उनके लिये ईश्वर से प्रार्थना है कि वह सदैव उनकी मति को धार्मिक कृत्यों की ओर आकर्षित बनाये रक्खे।

कृष्णचन्द्र।

# सूचना।

अनेक धार्म्मिक पुरुषों के अनुरोध से मैं ने धर्म्म के कठिन तत्वों को सरल व सुबोध (संस्कृत अथवा प्रचलित भारतीय राष्ट्र) भाषा में प्रकाश करने का भार ग्रहण किया है, इस विषय के कार्य्यालय का नाम "धर्म्मग्रन्थ-रत्नाकर" रक्खा है। जो सज्जन एक रुपया इस कार्य्यालय में जमा कराकर स्थायी ग्राहक होंगे, उनको इस कार्य्यालय का प्रत्येक पुस्तक पौने मूल्य में मिलेगा। अन्य पुस्तक भी यथासाध्य स्वल्प मूल्य में मिलेंगे। धर्म्मजिज्ञासुओं को ग्राहक होने में विलम्ब नहीं करना चाहिये। जब जब नूतन पुस्तक तैयार होगा तब तब ग्राहकों को सूचना देदीजायगी। धर्म्मग्रन्थ-रत्नाकर का प्रथम रत्न तो आपके हाथ ही में है, इसे शान्ति पूर्व्वक पढ़ने पर आप को मालूम होगा कि इस कार्य्यालय ने आपकी सेवा के लिये कितना कठिन कार्य्य अपने हाथ में लिया है।

प्रार्थी—

व्यवस्थापक—

धर्म्मग्रन्थ-रत्नाकर कार्य्यालय।

नं० ११ ताराचन्द दत्त ष्ट्रीट,

कलकत्ता।

# अवश्य पढ़िये।

श्रीमदाचार्य पं० कृष्णचन्द्र सूरि रचित निम्नलिखित पुस्तकें भी यथाशीघ्र प्रकाशित होनेवाले हैं, सज्जनों को ग्राहक-श्रेणी में शीघ्र नाम लिखवा लेना चाहिये।

१ सचित्र-वर्ण-विनोद—इस पुस्तकमें वर्ण-ज्ञान और अकारादि क्रम से मात्राओं का विषय उत्तमता पूर्वक समझाया गया है। अकारादि क्रम से चित्र भी हैं।

२ संयुक्त-वर्ण-विनोद—इस पुस्तक में मिलावटी अक्षरों का विषय भलीभांति दर्शाया है। उक्त दोन्हों पुस्तकों के पढ़ने से बालक भारतीय-प्रचलित-राष्ट्रभाषा और संस्कृत भाषा पुस्तकों को सहज में पढ़ सकते हैं राष्ट्रीय और धार्मिक भावों का भी इनमें पूर्णतया समावेश है।

३ महेश-महिम-वर्णन—यह संस्कृत काव्य भाषाटीका सहित है, इसमें शास्त्रीय प्रमाणों से और लौकिक दृष्टान्तों से ईश्वर के अस्तित्व का प्रतिपादन किया गया है, और वैसे ही नास्तिकादि कुत्सित मतों का खण्डन भी किया है ईश्वर-भक्तों के लिये तो यह ग्रन्थ अमूल्य रत्न है।

४ सदाचार-शिक्षा-निरूपण—यह पुस्तक सदाचार प्रेमियों और प्रचारकों का तो मानो प्राण ही है, हरएक गृहस्थ के पास रखने लायक है।

५ धार्मिक-लक्षण-वर्णन—इसमे केवल धर्म्म के लक्षणों का वर्णन है, बालकों को उपयोगी है, प्रथम सं० मूल्य केवल ।=)

व्यवस्थापक

धर्मग्रन्थ-रत्नाकर-कार्य्यालय